




# Welcome to THE KINGDOM of FUN



KISHKINTA is the name of the legendary monkey kingdom in the Indian epic Ramayana, where fun and frolic reigns.
KISHKINTA THEME PARK, 25kms south of Chennai, is India's first themed amusement park. Spread across 120 acres of delightful greenery, gardens and lakes, this fun paradise is a must-visit spot in Chennai

*for all kids from six to sixty !*




**India's No.1 Theme Park**
Tambaram, Chennai.

Tel: 044 8256880, 8258988, 2367244. e-mail: kishkinta@eth.net

**Visit us at www.kishkintaindia.com**

A special gift for you along with this April issue of CHANDAMAMA






Bring a copy /photocopy (xerox) of this coupon and get one Junior * (Child) Fun package ticket ( Entry + 17 fabulous rides ) worth Rs. 120/- absolutely free.

*Conditions apply: height below 4' 6"

Name :..........................................
School:..........................................
Res. Address:..........................................
..........................................
..........................................
Date of birth:..........................................

**FREE**
TICKETS TO KISHKINTA
**WORTH Rs.120/-**

Cannot be combined with any other offer. Not valid for group bookings One ticket per coupon. Valid upto 30 April 2001

# चन्दमामा



सम्पुटः - १८ एप्रिल् - २००१ सञ्चिका - १

## अन्तरङ्गम्

**कथाः**
परोपकारात् तृप्तिः ....... ०९
चतुरा स्नुषा ....... २६
कवेः दौत्यम् ....... ४३
राज्ञः समस्या ....... ६३

**पौराणिकधारावाहिनी**
महाभारतम् - ६१ ....... ४७
**चित्रकथामाला**
अजेयः गरुडः - १ ....... ५५
**ज्ञानप्रदधारावाहिनी**
यक्षपर्वतः - २ ....... १५
**नववर्षविशेषः**
विंशतितमे शतके भारतम् - ४ ....... २७
**स्थिरशीर्षिकाः**
वार्ताविशेषः ....... ०८
एतन्मासे जातः महापुरुषः ....... १४
भारतम् अवगम्यताम् ....... ५४
चित्रशीर्षिकास्पर्धा ....... ६६

Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai-600 026 on behalf of Chandamama India Limited, No.82, Defence Officers Colony, Ekattuthangal, Chennai - 600 097. Editor: Viswam

## एतस्य अङ्कस्य विशेषाः



परोपकारात् तृप्तिः (वेतालकथा)

यक्षपर्वतः



भारत-गौरव-गाथा



अजेयः गरुडः



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्गुलीयकम् | - ring | निचोलः | - skirt |
| अतिक्रमणकारिणः | - infiltrators | निमन्त्रणम् | - invitation |
| अनपत्यः | - childless | निर्वहणाधिकारी | - executive officer |
| अनवधानवशात् | - by mistake | पर्व | - festival |
| अनुद्विग्नः | - calm | पीनसः | - cold |
| अपुरस्कृतम् | - refused | प्रणिगदनम् | - report |
| अवधानम् | - attention | प्रतिभूः | - a surety |
| अस्थि | - bone | प्रभवति | - capable to do |
| आसादितवान् | - gained | प्रस्रवणम् | - leaking |
| उग्रगामिनः | - terrorists | बहिष्कृतम् | - expelled |
| उपायनम् | - presentation | माध्यस्थ्यम् | - mediation |
| कांस्यम् | - bronze | युक्तम् | - right |
| किसलयः | - inflorescence | रचयिता | - composer |
| किंवदन्ती | - rumer | राङ्कवम् | - shawl |
| कूपी | - bottle | विलक्षणा | - peculier |
| गोधूमः | - wheat | शयानः | - one who has lied down |
| घरट्टः | - grinding stone | सञ्चयः | - savings |
| चाकलेहः | - chocolate | सुगन्धद्रव्यम् | - scent |
| चूर्णयति | - poweders | हस्ताक्षरम् | - signature |
| द्वैधीभावः | - dilema | | |
| नतमस्तकः | - bowed | | |



संस्थापकौ –
चक्रपाणिः नागिरेड्डी च

# सम्पादनीया प्रकृत्याः मैत्री

एल्-साल्वडार्प्रदेशस्य 'सान्ता टेक्ला' मनोहरशैलानाम् अधः विद्यमानं सुन्दरवातावरणयुक्तं कोलाहलरहितं नगरम् । एतं प्रदेशम् उभयतः अपि केचन लघुग्रामाः आसन् । तैः लघुग्रामैः नगरेण वा कदापि विशेषवार्ता न उद्भाविता आसीत् इतःपूर्वम् ।

अस्य वर्षस्य जनवरीमासस्य १३ दिनाङ्के तत्रत्या स्थितिः परिवर्तिता । एषः प्रदेशः वार्ताविषयः जातः, परन्तु असमीचीनकारणेन । शैलस्य अर्धभागपर्यन्तम् आगतानि बहूनि सुन्दराणि गृहाणि एकैकशः पतनं प्राप्नुवन् । अधः विद्यमानानि शतशः गृहाणि, सहस्रशः जनान् च अनाशयन् । सर्वत्र धूलिः आवृता । श्वासोच्छ्वासोऽपि कष्टाय जातम् ।

सहस्रशः वृक्षान् उत्पाट्य कर्तयित्वा वा एतानि गृहाणि धनिकजनैः निर्मितानि आसन् । एतस्मात् महत्यः शिलाः शिथिलाः दुर्बलाः च जाताः आसन् । महाविपदः कारणम् आसीत् तदेव । एषः विज्ञानिनाम् अभिप्रायः ।

ये तानि ऊर्ध्वभागस्थानि गृहाणि क्रीतवन्तः आसन् ते सर्वकाराय प्रभूतं धनं दत्तवन्तः आसन् । परन्तु नगरस्य प्रमुखः आस्कर आर्टिस् पृच्छति – ''येन सम्पादितेन धनराशिना अस्माकं पुत्राः एव विपत्तिग्रस्ताः भवेयुः तेन धनसम्पादनेन किम् ?'' इति ।

''शीतकालः सम्प्राप्तः चेत् अपि अनतिदूरे स्यात् एव खलु वसन्तः ?'' इति पृच्छति कविः शेल्लिः । अहो ! मूर्खता अस्माकम् ! वसन्तः बहुदूरे स्यान्नाम । सः न आगच्छेत् एव, यदि वयं वृक्षनाशे एव मग्नाः भवेम । प्रकृत्याः असमीचीनं निर्वहणं कृतम् इति कारणतः कालचक्रं अस्तव्यस्तं जातमस्ति ।

यदि प्रकृतिः मनुष्येण आद्रियते तर्हि सा वात्सल्यमयी भवितुम् अर्हति । अतः कालातिपातात् पूर्वम् अस्माभिः प्रकृत्याः मैत्री सम्पादनीया ।

# क्षणोऽयं महतः सन्तोषस्य

एतस्याः वार्तायाः पठनात् पूर्वम् एव भवन्तः पत्रिकायां पठितवन्तः स्युः एव यत् राष्ट्रपतिः के. आर्. नारायणवर्यः चन्दमामायाः सम्पादन-मार्गदर्शकाय मनोजदासवर्याय **पद्मश्री-प्रशस्तिं** दत्तवान् इति । एतत् दृश्यं भवन्तः दूरदर्शने दृष्टवन्तः स्युः अपि । चन्दमामायाः असङ्ख्यग्राहकाणां कृते एषा महानन्ददायिनी वार्ता अस्ति ।



यावत् एषा पत्रिका मुद्रणार्थं सज्जीकृता तावता अपरा अपि सन्तोषकरी वार्ता प्राप्ता अस्ति यत् सर्जनात्मककृतिकाराय दीयमाना 'सरस्वतीसम्मान'प्रशस्तिः मनोजदास-वर्याय दास्यते इति ।

मनोजदासवर्यः गतेभ्यः त्रिंशद्वर्षेभ्यः चन्दमामाप्रकाशनेन सम्बद्धः अस्ति । सः स्वनाम्ना, अन्यैः विविधनामभिः च सह अनेकाः कथाः, अन्यानि लेखनानि च सज्जीकृतवान् । चन्दमामासंस्थया एव प्रकाश्यमानायाः 'दि हेरिटेज्'पत्रिकायाः संस्थापक-सम्पादकः अपि आसीत् सः ।



१९३९ तमे वर्षे ओरिस्सा-राज्यस्य सम्पद्युक्तपरिवारे सः जन्म प्राप्तवान् । जीवनस्य पूर्वार्धे एव तेन आध्यात्मिकदृष्टिः प्राप्ता । सः प्रश्नं प्राप्तवान् - 'किं मानवः स्वजीविते वास्तविकम् आनन्दम् अनुभवितुं शक्नुयात् ?' इति । अतः सः सहजतया अरविन्दोवर्यस्य श्रीमातुः च विचारधारया आकृष्टः जातः । १९६३ तमे वर्षे सः पाण्डिचेर्य्यां वासम् आरब्धवान् । सः श्री अरविन्दीये अन्ताराष्ट्रिय-शैक्षणिककेन्द्रे प्राध्यापकः अपि आसीत् ।

आङ्ग्लभाषया ओरियाभाषया च कृतिरचने समानसामर्थ्यं सम्पादितवतः प्रा॰ मनोजदासवर्येण ओरियाभाषया रचितः पद्यसङ्ग्रहः १९४९ तमे वर्षे एव प्रकाशितः । तत्काले सः इतोऽपि प्रौढः जातः न आसीत् । सः अतुलनीय-भारतीयपरम्पराविषये आधिक्येन लिखितवान् । तेन विविधाः प्रशस्तयः सम्माननानि च प्राप्तानि । तेषु साहित्याकाडमीप्रशस्तिः (१९७२), सरलाप्रशस्तिः (१९८०) साहित्य-भारतीप्रशस्तिः (१९९४) इत्यादयः अन्यतमाः । सः कानिचन वर्षाणि सिङ्गपूरसर्वकारस्य शैक्षणिक-मार्गदर्शकः अपि आसीत् ।

१९९७ तमे वर्षे यदा चन्दमामया स्वस्य सुवर्णजयन्ती आचरिता तदा कानिचन पुस्तकानि प्रकाशितानि । तेषु षट् पुस्तकानि मनोजदासवर्येण एव सज्जीकृतानि ।

सप्तमी कृतिः रस्किन्बाण्ड्वर्येण सज्जीकृता । रस्किन्वर्यः अपरः प्रसिद्धः कृतिकारः । सः अपि चन्दमामायाः सम्पादनमार्गदर्शकः । तेनापि १९९९ तमे वर्षे **पद्मश्रीप्रशस्तिः** प्राप्ता ।

एषोऽपि १९३४ तमे वर्षे जातः । एतेन स्वबाल्यं यापितम् इंग्लेण्ड्देशे । अल्पे एव वयसि एतेनापि कृतिरचना आरब्धा । साहित्याकाडमी-प्रशस्तिः अपि प्राप्ता अस्ति एतेन । बालकृति-रचनानिमित्तम् एतस्मै हेन्स्क्रिश्चियन् अण्डर्सन्प्रशस्तिः दत्ता । (१९९८)

सः भारतीयजनजीवनविषये पर्वतनद्यादीन् पृष्ठभूमौ निधाय कृतीः रचयति । गतात् एकस्मात् वर्षात् चन्दमामा तदीयकृतीः प्रकाशयन्ती अस्ति ।

**वयं वाचकैः भवद्भिः सहैव मनोजदासवर्यं रस्किन्बाण्ड्वार्यं च सानन्दम् अभिनन्दामः । अग्रिमे काले अपि तयोः कृतयः मार्गदर्शनानि च अस्मान् प्रोत्साहयिष्यन्ति इति वयं विश्वसिमः ।**

**- प्रकाशकः**

**विरामदिनानि उपयुज्यन्ताम् पारितोषिकप्राप्त्यर्थम्**

**नवम्बर् - २००१ सञ्चिकायाः निर्माणे**

## साहाय्यार्थं निमन्त्र्यन्ते बालाः

**किशोरलेखकाः निमन्त्र्यन्ते** - ३००-५०० शब्दैः युक्ताः आकर्षकशीर्षकयुक्ताः कथाः, विनोदकणिकाः, प्रहेलिकाः, कूटप्रश्नाः इत्यादयः प्रेषणीयाः इति । ते च आंग्लभाषया, हिन्दीभाषया, बङ्गालीभाषया, ओरियाभाषया, मराठीभाषया, गुजरातीभाषया, तेलुगुभाषया, कन्नडभाषया, तमिलुभाषया, मलयालभाषया वा रचिताः स्युः । त्रयः विषयाः प्रेषयितुं शक्याः । भवतां मित्रं चित्रलेखकः चेत् तम् अपि वदन्तु - चित्रं प्रेषयतु इति । तेन प्रेषितानि चित्राणि उत्तमानि चेत् चेन्नैनगरं प्रति आगच्छतु इति सः सूच्यते (व्ययः अस्माभिः निरूह्यते) अन्तिमरूपदानाय ।

**किशोरकलाकाराः निमन्त्र्यन्ते** - भारतस्य इतिहासं पुराणादिकं च अधिकृत्य रचितानि त्रीणि चित्राणि (विवरणानि अक्षरैः लेखनीयानि) प्रेषयितुं शक्यानि । येषां चित्रम् अस्माकं तृप्त्यै भवति ते चेन्नैनगरं प्रति निमन्त्र्यन्ते चितानां कथानां कृते चित्रलेखनाय ।

**अन्तिमः दिनाङ्कः** - जून् ७, २००१

**पुरस्कारः** - अपूर्वाणां प्रयत्नानां निमित्तम् आकर्षकाः पुरस्काराः ।

**भावचित्रम्** - चित्रकथादिभिः सह भवतां लघुभावचित्रम् अपि प्रेषयन्तु ।

नाम ............................................ वयः / जन्मदिनाङ्कः ....................

कक्ष्या .......... विद्यालयनाम ..................................................

गृहसङ्केतः .................................................................

.............................................................................

.............................................................................

....................................................... पिन्कोड् ....................

प्रेषितानां विवरणम् -

१. ...................................................

२. ...................................................

३. ...................................................

अहम् अत्र प्रमाणीकरोमि यत् एतेन सह प्रेष्यमाणाः लेखाः / प्रेष्यमाणानि चित्राणि मम पुत्रेण / पुत्र्या स्वयं रचिताः / रचितानि । चितायाः कृते उपयोगः ययाकयाचिदपि भाषया, मुद्रणमाध्यमेन, इलेक्ट्रानिक्स्माध्यमेन, अन्यमाध्यमेन वा कर्तुं मम अनुमतिः अस्ति, तस्याः स्वाम्यं चन्दमामा एव अर्हति ।

*भागग्राहिणः हस्ताक्षरम्* *पोषकस्य हस्ताक्षरम्*

**(एतत् आवेदनपत्रं प्रपूर्य कृत्या सह प्रेष्यताम्)**

I. भवान् किं चन्दमामायाः ग्राहकः अस्ति ? भवता कया भाषया प्रकाश्यमाना पठ्यते ?

.........................................

II. यदि भवान् ग्राहकः न, तर्हि चन्दमामा कथं प्राप्यते इति लिख्यताम् । ('✓' चिह्नेन अङ्क्यताम्)

पत्रिकावितारकद्वारा - ....................

ग्रन्थालयात् - ..........................

मित्रतः - ..................................

III. भवता प्राप्यमाणां चन्दमामां कति जनाः पठन्ति ?..............................

IV. कः विषयः भवते आधिक्येन रोचते ? (रुचिम् आद्यताक्रमेण सूचयतु ।)

१.........................................

२ .........................................

३ .........................................

४ .........................................

५ .........................................

६.........................................

V. कः विषयः चन्दमामायां योजनीयः इति भवान् अभिप्रैति ?

१.........................................

२.........................................

३.........................................

४.........................................

VI. कानि चित्राणि भवते विशेषतः अरोचन्त ? (तेन चित्रेण युक्तायाः कथायाः नाम/ पुटसङ्ख्यां, सञ्चिकामासं च उल्लिखतु ।)

.........................................

.........................................

.........................................

.........................................

.........................................

VII. गतेषु षट्सु मासेषु प्रकाशितायाः कस्याः सञ्चिकायाः मुखचित्रं भवते अरोचत ? (भाषां मासं च उल्लिखतु ।)

.........................................

.........................................

VIII. (अ) भवतः मातुः पितुः च वृत्तिः का ?

मातुः वृत्तिः ............................

पितुः वृत्तिः ............................

(आ) कुटुम्बस्य मासिकः आयः कः ? ('✓' चिह्नेन अङ्कयतु)

- रू. ५०००/- ..........................
- रू. ५००१/- - १०,०००/- ..........
- रू. १०,०००/- रूप्यकेभ्यः अधिकः

.........................................

IX. भवान् किं दूरदर्शनं (TV) पश्यति ?

दूरदर्शनसरणिः ..........................

उपग्रहसरणिः ............................

X. भवतः गृहे दूरदर्शनं वर्णमयम् ?..........

उत श्वेतकृष्णचित्रोपेतम् ? ..................

XI. विद्यालयः कथं गम्यते ?

- विद्यालययानेन ......................
- नगरयानेन ..........................
- स्वगृहीययानेन चेत् -
  - द्विचक्रात्मकयानेन ..................
  - चतुश्चक्रात्मकयानेन ................

XII. भवन्तं कः विद्यालयं प्रापयति ?

मातापितरौ ..............................

चालकः ..................................

XIII. भवान् अन्यस्याः अपि कस्याश्चित् बालमासिक्याः ग्राहकः अस्ति किम् ?

पत्रिकानाम ..............................

XIV. किं भवता प्रतिदिनं दिनपत्रिका पठ्यते ?

पत्रिकानाम ..............................

# वेताल-कथा

## परोपकारात् तृप्तिः

दृढव्रती त्रिविक्रमः पुनश्च वृक्षसमीपं गत्वा शवं स्कन्धे आरोप्य मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''राजन्, मध्यरात्रसमये एतस्मिन् श्मशाने भूतप्रेतादयः स्वच्छन्दं विहरन्ति । यदाकादाचिदपि ते भवतः अहितं कर्तुम् अर्हन्ति । तथापि भवान् निर्भीकः सन् अत्र भ्रमणं कुर्वन् अस्ति इति तु आश्चर्याय । भवता किंनिमित्तम् एषः अपायः सम्मुखीक्रियते ? भवान् यस्य साहाय्यार्थं प्रयतमानः अस्ति, सः भवतः प्रयत्नेन यदि सन्तुष्टः न भवेत् तर्हि भवतः परिश्रमः व्यर्थः स्यात् । एतस्य उदाहरणरूपेण भवते शम्भोः कथां श्रावयामि । तां श्रद्धया शृणोतु तावत्'' इति ।



अनन्तरं वेतालेन कथा आरब्धा -

शम्भुः न महाधनिकः, किन्तु सरल-जीवनार्थं यावत् आवश्यकं तावत् तु आसीत् तस्य । सः विद्याभ्यासं न कृतवान् आसीत् । अतः महान् खेदः आसीत् तस्य । तदीयाम् एतां मनोवेदनाम् अवगत्य तस्य पितामहः कदाचित् अवदत् - ''शम्भो, जगति महाकार्यकरणात् अपि इतरेषां साहाय्यकरणम् एव श्रेष्ठम् । भवान् उत्तमः, सद्गुणी च । भवतः मनः निर्मलम् अस्ति । अतः भवान् भाग्यवान् एव'' इति ।

तदा शम्भुः पृष्टवान् - ''अहम् उत्तमः इत्यत्र किं प्रमाणम् ?'' इति ।

शम्भोः पितामहः हसन् अवदत् - ''उत्तमतायाः अर्थः - निस्स्वार्थिता । द्वेषः, ईर्ष्या, घृणा इत्यादयः भवति न सन्ति । इतरे सन्तुष्टाः भवेयुः इति भवान् सदा प्रयत्नशीलः भवति । तदर्थं स्वस्य सुखं त्यक्तुम् अपि भवान् सिद्धः भवति । एतादृशाः अनेके सद्गुणाः भवति सन्ति'' इति ।

''पितामह, गृहजनानां कल्याणं भवतु इति प्रार्थनाकरणे निस्स्वार्थता कथम् ? मम दृष्ट्या एतदपि स्वार्थमेव । अत्र लाभः अस्मदीयानाम् एव । इतरेषां हितं तु अत्र साधितं न भवति । यदि कलाकारः स्यां तर्हि जनान् प्रसन्नान् कर्तुं शक्नुयाम्'' इति अवदत् शम्भुः ।

तदा शम्भोः पितामहः - ''इतरेषाम् आनन्दाय, मनसः उल्लासाय वा भवता कलाकारेण भवितव्यं नास्ति । परोपकारं करोतु तावत्'' इति उक्तवान् ।

पितामहस्य वचनानि शम्भोः मनसि गाढं परिणामम् अजनयन् । तदारभ्य सः यथा-शक्ति परोपकारकरणे मग्नः अभवत् । तथापि तस्य चिन्ता न अपगता ।

एकदा शम्भोः बन्धुः कश्चित् तस्य गृहम् आगतवान् । शम्भोः उत्तमस्वभावविषये सः बहुधा श्रुतवान् आसीत् । सः शम्भुं स्वस्य जामातरं कर्तुम् इच्छति स्म । तस्य पुत्री पार्वती सुन्दरी, विनम्रा, बुद्धिमती च आसीत् । किन्तु शम्भुः - 'अहं विवाहं न इच्छामि' इति स्पष्टरूपेण कथितवान् ।

पार्वत्याः पिता आश्चर्यं प्रकटयन् - ''भवान् विवाहं किमर्थं न इच्छति इति वदतु तावत्'' इति उक्तवान् ।

उत्तररूपेण शम्भुः - ''अहम् असमर्थः अस्मि । अहं कामपि विद्यां न जानामि । अहं यत्किमपि कर्तुं न शक्नोमि'' इति

अवदत् ।

तदा पार्वत्याः पिता – ''भवान् कृषिं कुर्वन् अस्ति खलु । ततोऽप्यधिकं किं करणीयम् अस्ति ?'' इति पृष्टवान् ।

तदा शम्भुः – ''कृषौ मम वैशिष्ट्यं किमपि नास्ति । पितुः सूचनानुसारं केवलं कार्यं करोमि । स्वयं किमपि करणस्य सामर्थ्यं मयि नास्ति एव'' इति अवदत् ।

पार्वत्याः पिता – ''एवं कथनं भवतः विनम्रताम् एव द्योतयति । एषः अपि उत्तम-गुणः एव । कृषिज्ञानम् एकदिनाभ्यन्तरे ज्ञातुं तु न शक्यते । यदि अनुभवः प्राप्येत तर्हि अग्रे भवान् उत्तमः कृषिकः भवेत् । सन्तोषं च अनुभवेत्'' इति अवदत् ।

शम्भुः अवदत् – ''मम सन्तोषः ! सर्वथा असम्भवः.सः । सन्तोषः कथं प्राप्तव्यः इत्येव न जानामि अहम्'' इति ।

एतत् श्रुत्वा पार्वत्याः पिता क्षणकालस्य मौनस्य अनन्तरम् अवदत् – ''शम्भो, मया सह मम ग्रामम् आगच्छतु । अहं भवते सन्तुष्टेः मार्गं दर्शयिष्यामि'' इति । शम्भुः पार्वत्याः पितुः प्रस्तावम् अङ्गीकृतवान् । तस्यापि मनसि 'एकवारं पार्वती द्रष्टव्या' इति इच्छा आसीत् । अतः सः पार्वत्याः पित्रा सह ततः प्रस्थितवान् ।

पार्वत्याः क्रियाशीलता, प्रसन्नचित्तता च तस्याः सौन्दर्यस्य वर्धनं कुरुतः स्म । तां दृष्ट्वा शम्भोः मनसि अपि प्रसन्नभावस्य इच्छा जागरिता अभवत् । गृहप्राप्त्यनन्तरं विश्रान्तिम् अनुभूय बहिः गन्तुम् उद्युक्तः पार्वत्याः पिता शम्भुम् आहूय – ''भवतः ग्रामतः मया



कतिचन शुभशूचकविषयाः ज्ञाताः सन्ति । तान् श्रुत्वा मम ग्रामीणाः सन्तुष्टाः भवेयुः । इतरेषां सन्तोषेण एव भवतः आनन्दः खलु । चलतु मया सह'' इति अवदत् ।

पार्वती अपि ताभ्यां सह गमनम् इष्टवती । त्रयः यदा मिलित्वा प्रस्थितवन्तः । यावत् ते किञ्चिद्दूरं गतवन्तः तावता मार्गे कश्चन अष्टवर्षीयः बालः दृष्टः । सः अत्यन्तं दुःखी इव दृश्यते स्म ।

बालस्य स्थितिं दृष्ट्वा पार्वती पृष्टवती – ''किम् अभवत् वत्स?'' इति ।

तदा सः बालः – ''मम वर्णमयं गोलकं गुल्मेषु लुप्तम् । अहम् अन्वेष्टुं प्रयत्नं कृतवान् । किन्तु तत्र सर्पस्य फूत्कारः श्रूयते । तत्र सर्पः अस्ति इति भाति'' इति अवदत् ।

पार्वती – ''भवान् भीरुः इति भाति ।



पर्ण यदा अपरं पर्ण स्पृशति तदा वायुकारणतः शब्दः भवति'' इति उक्त्वा पितरम् उद्दिश्य – ''तात, गोलकं निष्कास्य एव अग्रे गच्छामि'' इति अवदत् ।

''भवती स्वस्य स्वभावं कथं परित्यजेत् ?'' इति वदन् पार्वत्याः पिता अग्रे गतवान् ।

शम्भुः, पार्वत्याः पिता च कस्यचित् गृहं गतवन्तौ । पार्वत्याः पिता गृहस्वामिनम् उद्दिश्य – ''भवान् भाग्यशाली । पुत्र्याः विवाहविषये चिन्तयन् भवान् चिन्ताक्रान्तः खलु । गिरीशः भवतः पुत्रीं परिणेतुम् सिद्धः अस्ति । वरदक्षिणारूपेण यावत् दीयेत तावता सन्तुष्टः भवेत् सः'' इति उक्तवान् ।

तदा गृहस्वामी सन्तोषेण – ''शुभवार्ताम् एव आनीतवान् अस्ति भवान् । किन्तु गणपतिः किम् अवदत् ?'' इति अपृच्छत् ।

पार्वत्याः पिता – ''गणपतिः धनाशया ग्रस्तः अस्ति । सः एतं विवाहप्रस्तावं न अङ्गीकुर्यात् इति भाति'' इति उक्तवान् ।

गृहस्वामी – ''भवतु नाम, अस्माकं भाग्ये यत् लिखितं तदेव भविष्यति'' इति ।

ततः प्रस्थाय पार्वत्याः पतिः शम्भुः च अपरं गृहं गतवन्तौ । तत्रत्यम् एकं युवकं दृष्ट्वा पार्वत्याः पिता – ''अस्मिन् जन्मनि उद्योगः लभ्येत वा न वा इति वदन् आसीत् खलु भवान् । शम्भोः ग्रामे भूस्वामिनः द्वितीयपत्न्याः पुत्राणां पाठनकार्यम् अस्ति । ते प्रतिमासं द्विशतं रूप्यकाणि दास्यन्ति । भवतः कार्यप्रगतिं परिशील्य ते उत्तमम् उद्योगम् अपि दापयेयुः'' इति अवदत् ।

तदा सः युवकः – ''भूस्वामिनः प्रथमपत्न्याः नियन्त्रणे एव अधिकाराः अधिकतया सन्ति इति मया श्रुतम् । तस्याः पुत्रान् यदि पाठयेयं तर्हि उत्तमम् अभविष्यत् । किं सः उद्योगः मया न प्राप्येत ?'' इति अपृच्छत् ।

तदा पार्वत्याः पिता – ''ते तु संस्कृतपण्डितम् इच्छन्ति । भवान् संस्कृतं न जानाति खलु ?'' इति अवदत् ।

सः युवकः – ''भवतु नाम, मम ललाटलिखितं तदेव स्यात्'' इति अवदत् ।

शम्भुः पार्वत्याः पित्रा सह गृहं प्रत्यागच्छन् आसीत् । मार्गे पार्वती पितरम् अवदत् – ''तात, अहं गोलकं बालकाय दत्तवती । किन्तु मया परिश्रमः करणीयः अभवत्'' इति । पार्वती अत्यन्तं प्रसन्ना दृश्यते स्म ।

गृहप्राप्त्यनन्तरं पार्वत्याः पिता शम्भुं प्रति

– ''पार्वत्याः प्रसन्नतायाः कारणं किं भवान् ज्ञातवान् ?'' इति अपृच्छत् ।

शम्भुः अवदत् – ''अवगमने अशक्यं किम् अस्ति अत्र ? गोलकस्य प्राप्तिकारणतः बालकः सन्तुष्टः । परिश्रमेण अन्विष्टम् इत्यतः एषा सन्तुष्टा । किन्तु यस्य वैवाहिक-सम्बन्धस्य विषये भवान् गृहजनान् वदन् आसीत् ते न तथा सन्तुष्टाः इति भाति । तथैव युवकः अपि सन्तुष्टः इति न अभासत । यतः सः भूस्वामिनः प्रथमपत्न्याः गृहे उद्योगम् इच्छति स्म'' इति ।

दीर्घं निःश्वसन् पार्वत्याः पिता अवदत् – ''परोपकारकरणमात्रम् अस्मदधीनम् । तेषां सन्तोषः अस्माकं हस्ते नास्ति'' इति ।

एवं कथां समाप्य वेतालः अवदत् – ''राजन्, सन्तुष्टेः परोपकारस्य च विषये पार्वत्याः पिता वाक्चातुर्येण शम्भुं तोषयितुं प्रयत्नं कृतवान् । मम भाति यत् सन्तोषः कथं प्राप्यते इति पार्वत्याः पिता स्वयं न अवगतवान् इति । सः विषयः तस्य चिन्तनबाह्यः इति भाति । मम एतेषां सन्देहानां समाधानं ज्ञात्वा अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् – ''पार्वत्याः पिता व्यक्तीनां विभिन्नमानसिकताः सम्यक् अभिजानाति स्म । यस्य गृहस्थस्य पुत्र्याः विवाहविषये एव सन्देहः आसीत्, तादृशः, यदा सम्बन्धः निश्चितः तदा 'इतोऽपि समीचीनतरः सम्बन्धः यदि लब्धः स्यात् तर्हि सम्यक् अभविष्यत्' इति अवदत् । तथैव यस्य उद्योगप्राप्तिविषये एव सन्देहः आसीत्, तादृशः, 'इतोऽपि समीचीनतरः उद्योगः लब्धः चेत् उत्तमम् अभविष्यत्' इति उक्तवान् । 'परोपकारः जनान् तोषयितुं न करणीयः, प्रत्युत तेषां साहाय्यार्थं करणीयः । साहाय्य-करणं सरलम् । किन्तु तुष्टीकरणम् अत्यन्तं कठिनम्' इत्येतां जीवनस्य वास्तविकतां सम्यक् अवगतवान् आसीत् पार्वत्या पिता । अतः तस्य वाक्चातुर्यमात्रम् अस्ति इति यत् भवतः मतम् अस्ति तत् आधाररहितम् इत्येव वक्तव्यम्'' इति ।

एवं राज्ञः मौनं भञ्जितवान् वेतालः ततः अदृश्यः भूत्वा वृक्षे लम्बमानः अतिष्ठत् ।



# एतन्मासे जातः राष्ट्रनायकः

अस्माकं देशस्य अत्युत्तमगायिकासु अन्यतमायाः एम्. एस्. सुब्बलक्ष्मीमहाभागायाः सुमधुरकण्ठात् निर्गच्छत् सुश्राव्यं गानं 'भावयामि रघुरामम्' इदानीमपि श्रोतॄणां मनस्सु निरन्तरानन्दं जनयति । यद्यपि तस्य गीतस्य रचनानन्तरम् अनेकानि वर्षाणि अतीतानि, तथापि तस्य जनप्रियता तावत् अक्षुण्णा । केन इदं रचितम् ? एतस्य, एतादृशानाम् अन्येषां बहूनां शास्त्रीय-गीतानां च रचयिता अस्ति सुप्रसिद्धः सङ्गीत-कृतिकारः महाराजः स्वातितिरुनाल्महाभागः ।

इदानीं केरले स्थिते त्रावाङ्कूरराजपरिसरे १८१३ तमे वर्षे एप्रिल्मासस्य १६ दिनाङ्के तिरुवनन्तपुरे जातः स्वातितिरुनाल्वर्यः । पुत्रसन्तानः नास्ति इत्यतः नितरां खिन्नः आसीत् महाराजः । यदा तस्य सहोदरी गर्भवती जाता तदा एव महाराजः घोषितवान् यत् एषः एव भावी महाराजः इति । सः शिशुः एव स्वातितिरुनालः । जननात् पूर्वमेव महाराजः इति घोषितः इत्यतः 'आगर्भश्रीमान्' इति सः प्रसिद्धः जातः । तस्य नाम 'रामवर्मा' इति कृतम् । तदीयं कुलनाम 'कुलशेखरः' इति । तथापि जन्मनक्षत्रस्य स्वात्याः कारणेन 'स्वातितिरुनाल्' इत्येव सः प्रसिद्धः ।

१८२९ तमे वर्षे एप्रिल्मासस्य २१ दिनाङ्के स्वस्य सप्तदशे वर्षे स्वातितिरुनालः महाराजत्वेन अभिषिक्तः । सः स्वस्य समर्थताम्, उत्तमां निर्वहणाधिकारितां च दर्शितवान् । सः भारतस्य प्रथमवीक्षणालयं, सार्वजनिकग्रन्थालयं, न्यायालयं च निर्मितवान् । सः भौगोलिकसर्वेक्षणं सार्वजनिकसन्दर्शनं च परिचायितवान् । आलोपथिवैद्यपद्धतेः प्रचारे, विद्यालयेषु आङ्ग्ल-भाषायाः प्राशस्त्यकल्पने च तेन विशेषपरिश्रमः कृतः । सः न केवलम् एतादृशेषु विषयेषु, अपि तु सङ्गीते, साहित्ये, कलासु, तत्त्वशास्त्रेषु चापि



महाराजः स्वातितिरुनालः

अग्रगण्यः आसीत् । तस्य कालः सङ्गीतकलानां सुवर्णकालः इत्येव मन्यते ।

अपि च स्वस्य सङ्गीतकलासक्त्यादीनां कारणतः सः बहुकष्टम् अन्वभवत् । एतेन सङ्गीतकलादीनां वर्धनाय क्रियमाणं व्ययं राज्यस्य ब्रिटिश्-अधिकारी जनरल् कुलेन् न अङ्गीकृतवान् । सः शासनव्यवहारे निरन्तरं अनावश्यकप्रवेशम् आरब्धवान् । यावत् शक्यते तावत् तिरुनालवर्यः तं दूरे एव स्थापितवान् । यदा तथा कर्तुं न शक्तं तदा सः स्वयमेव शासनव्यवहारात् दूरं गतः । आत्मानं सः सङ्गीतधर्मादिषु एव योजितवान् । सः १८४६ तमे वर्षे डिसेम्बर्मासस्य २५ तमदिनाङ्के दिवङ्गतः ।

स्वातितिरुनालवर्यः सामान्यतः ४०० कृतीः संस्कृतं, मलयालं, हिन्दुस्थानी, तेलगु, कन्नड इत्यादिभिः भाषाभिः रचितवान् । सर्वाः अपि भक्तियुताः एव ।

अल्पे जीवितकाले एव अमूल्याः कृतीः विरचय्य या सेवा तेन राजकृतिकारेण कृता सा तु निश्चयेन अनुपमा एव । एतस्य सुमधुरकृतयः भाविश्रोतॄन् अपि निरन्तरं तोषयेयुः एव ।




# यक्षपर्वतः

## २

*[आक्रामकनायकः स्वर्णाचार्यनामकं कश्चित् वास्तुविदं गृहीत्वा तद्द्वारा अरण्यस्थे कुटीरद्वये निवसतोः क्षत्रिययुवकयोः विषये कांश्चन अंशान् ज्ञातवान् । यदा ते आक्रामकाः स्वर्णाचार्यं ततः नेतुम् उद्युक्ताः तदा सः आक्रोशनं कृतवान् । एतत् विघ्नेश्वरपूजकः श्रुतवान् । सः क्षत्रिययुवकाभ्यां पालितं सिंहं बन्धात् विमोच्य आक्रामकान् लक्ष्यीकृत्य प्रेरितवान् । सिंहः एकम् आक्रामकजनं गृहीतवान् । तदनन्तरम्...]*

गर्जतः सिंहस्य आकस्मिकम् आक्रमणं दृष्ट्वा आक्रामकनायकः दिग्भ्रान्तः भीतः च । इदानीं किं करणीयम् इति सः क्षणकालं चिन्तितवान् । अनन्तरं सः सिंहं लक्ष्यीकृत्य स्वकीयं शूलं क्षिप्तवान् । शूलं सिंहस्य समीपे भूमौ लग्नं जातम् । तथापि सिंहः तु किञ्चिदपि न भीतः । सः तम् आक्रामकभटं मुखेन कण्ठे सुदृढं गृहीत्वा इतस्ततः चालयन् एव आसीत् ।

आक्रामकनायकः असहायकदृष्टिं सर्वत्र प्रसारितवान् । यं सिंहः गृहीतवान् आसीत् तस्य उष्ट्रः भीत्या क्षत्रिययुवकयोः कुटीरसमीपे धावति स्म । अपरस्य अनुचरस्य उष्ट्रस्य उपरि स्थितः स्वर्णाचार्यः साहाय्यं याचन् – 'भो, भोः मां रक्षन्तु' इति उच्चैः आक्रोशनं कुर्वन् आसीत् ।

लुण्ठाकनायकः स्वर्णाचार्यं कोपेन पश्यन् अवदत् – ''अये ! मौनेन तिष्ठतु तावत् । अन्यथा भवन्तम् उष्ट्रात् पातयिष्यामि । तदा भवान् तस्य सिंहस्य आहारः भविष्यति'' इति ।

एतत् श्रुतवतः स्वर्णाचार्यस्य महान्



आनन्दः जातः । 'एषः सिंहः मया आ बहोः कालात् दृष्टः । तस्मात् एषः मां सम्यक् जानाति । अतः एषः मां न पीडयति' इति सः जानाति स्म ।

अतः सः भीतिम् अभिनयन् अवदत् - ''उष्ट्रनायकवर्य ! मां सिंहस्य आहारम् एव करोतु कृपया । तेन एतस्यां जन्मभूम्यां प्राणत्यागः मम भवेत् । जन्मभूमिः सर्वतोऽपि श्रेष्ठा खलु ? अपरिचिते प्रदेशे मरणं प्राप्तं चेत् मम उत्तरसंस्कारकर्ता अपि कोऽपि न भवेत्'' इति ।

'उष्ट्रात् एतस्य पातनम् एव वरम्' इति आक्रामकनायकः सकृत् अचिन्तयत् । किन्तु पर्वतप्रदेशे स्थिता स्वकीया राजधानी यदा तेन स्मृता तदा तदीयं चिन्तनं परिवृत्तम् अभवत् ।

अतः सः अनुयाचिनम् आज्ञापितवान् - ''अये ! एतस्य पातनं मास्तु । यत् पर्वतदुर्गम् अस्माभिः निर्मातव्यम् अस्ति तदर्थम् एतस्य उपयोगः भवितुम् अर्हति । अतः एतं नयाम । तत्र एषः यदि अस्माकं वचनं न शृणुयात् तर्हि एतं पर्वतदुर्गात् अधः पातयाम । अथवा खण्डशः कर्तयित्वा भूतेभ्यः बलिरूपेण अर्पयाम'' इति ।

एतत् श्रुतवतः स्वर्णाचार्यस्य भीतिः प्रवृद्धा । सः पुनः पुनः - 'भीम ! भीम !' इति सिंहं सम्बोधयन् - 'मां रक्षन्तु । मां रक्षन्तु कृपया' इति उच्चैः बहुधा आक्रोशनं कृतवान् ।

स्वस्य नाम श्रुत्वा सिंहः भीमः स्वर्णाचार्यस्य उष्ट्रस्य दिशि अधावत् । तदा उपस्थिताम् आपदं जानन् आक्रामकभटः झटिति उष्ट्रं प्रेरितवान् । उष्ट्रः क्षेत्रस्य दिशि वेगेन अधावत् । 'इतः परम् अत्र स्थित्या न किमपि प्रयोजनम्' इति विचिन्त्य आक्रामकनायकः स्वस्य उष्ट्रम् अपि वेगेन प्रेरयन् तम् अनुसृतवान् ।

कुटीरस्य पृष्ठतः निलीय स्थितः विघ्नेश्वरपूजकः एतत्सर्वं पश्यन् आसीत् । स्वर्णाचार्यः आक्रामकैः नीतः यत् तदर्थं सः नितरां दुःखितः ।

ततः किञ्चित्कालस्य अनन्तरं तौ क्षत्रिययुवकौ मृगयां समाप्य मृतान् प्राणिनः गृहीत्वा स्वकुटीरं प्रत्यागतौ ।

तौ दूरात् एव दृष्ट्वा विघ्नेश्वरपूजकः धावन् गत्वा तयोः समीपे उपस्थाय अवदत् - ''महावीरौ ! सर्वनाशः सम्पन्नः । यत् न

भवेत् तत् घटितम् । सः भवद्भ्याम् एव रक्षणीयः'' इति ।

तदा तयोः अन्यतरः क्षत्रिययुवकः तं तीक्ष्णदृष्ट्या पश्यन् - ''कीदृशः सर्वनाशः ? कः रक्षणीयः आवाभ्याम् ? पञ्जरस्थः अयं भीमः कथं बन्धमुक्तः जातः ?'' इति उच्चस्वरेण अपृच्छत् समीपम् आगतं सिंहं दर्शयन् ।

विघ्नेश्वरपूजकः प्रवृत्तं समग्रं विस्तरेण निवेद्य - ''सिंहेन मारितस्य आक्रामकभटस्य कस्यचित् शवः कुटीरसमीपे पतितः अस्ति । सः भवद्भ्यां प्रत्यक्षं द्रष्टुं शक्यः'' इति अवदत् ।

तौ क्षत्रिययुवकौ तम् अनुसृत्य कुटीरसमीपं गतवन्तौ । मृतं शवं दर्शयन् सः अवदत् - ''पश्यताम् । सिंहस्य दंशनात् पादप्रहाराच्च मृतः अयम्'' इति ।

तयोः अन्यतमः जीवदत्तः शवं परीक्षा-दृष्ट्या दृष्ट्वा अवदत् - ''एषः अरण्यवासी न । मुखलक्षणदर्शनात् ज्ञायते यत् दूरप्रदेशात् कस्माच्चित् अत्र आगतः स्यात् अयम् इति'' इति ।

''एषः यदि प्राणैः वियुक्तः न स्यात् तर्हि, कुतः आगतं, किमर्थम् आगतम् इत्यादिकं विवरणम् अनायासेन ज्ञातुं शक्यम् अभविष्यत्'' इति अवदत् खड्गवर्मा नाम अपरः क्षत्रिययुवकः ।

''मित्र ! एतेषाम् आक्रामकाणां विषये अधिकं ज्ञातव्यम् अस्माभिः । एतेषाम् अनुसरणम् अपि कर्तव्यम् । ते कस्यां दिशि धावितवन्तः इति गण्डकजातीयेषु कोऽपि



जानीयात् एव'' इति उक्त्वा जीवदत्तः पूजकम् उद्दिश्य अवदत् - ''गण्डकजातीयः कोऽपि समीपे क्वचित् दृष्टः चेत् तम् अत्र आनयतु'' इति ।

विघ्नेश्वरपूजकः ततः निर्गतः । ततः अनतिदूरे एव अनुचरैः सह स्थितः गण्डक-जातीयानां नायकः अरण्यमल्लः तेन दृष्टः । गण्डकजातीयाः ते सर्वे उच्चस्वरेण वार्तालापं कुर्वन्तः आसन् ।

पूजकः तेषां समीपं गत्वा अवदत् - ''क्षत्रिययुवकौ मृगयां परिसमाप्य इदमिदानीं प्रत्यागतौ स्तः । उष्ट्रवाहनाः जनाः क्व गताः इति किं भवत्सु केनापि दृष्टम् ? तैः मम प्रियमित्रं स्वर्णाचार्यः अपहृत्य नीतः अस्ति'' इति ।

''पूजकवर्य ! ते शत्रवः अस्माकं धान्य-



सस्यानि सर्वाणि नाशयित्वा धान्यं वशीकृत्य पलायितवन्तः । तौ खड्गवर्मजीवदत्तौ इदानीं कुत्र स्तः ?'' इति आतङ्कमिश्रितस्वरेण पृष्टवान् अरण्यमल्लः ।

ततः विघ्नेश्वरपूजकम् अनुसरन्तः ते कुटीरसमीपम् आगतवन्तः । अरण्यमल्लः तौ तरुणौ अवदत् - ''आर्यौ ! ते आक्रामकाः अस्माकं धान्यसम्पत्तिं समग्रां लुण्ठयित्वा गतवन्तः । तान् सम्मुखीकर्तुं वयं समर्थाः न जाताः । अतः वयं सर्वे अरण्यपुरं प्रत्यागताः'' इति ।

''धिक् भवन्तम् । राजा सन् अपि भवान् आगतान् शत्रून् सम्मुखीकर्तुं न शक्तः यत् तत् किं न लज्जास्पदम् ? भवतः भीरुतां दृष्ट्वा भवदनुचराः सर्वे किं भवन्तं न उपहसेयुः ?'' इति कोपमिश्रितस्वरेण पृष्टवान् खड्गवर्मा ।

''किं तस्य विषये क्रोधप्रकटनेन ? वस्तुतः भवतां कोपपात्रम् अहं स्यां, न तु सः । यतः तदवसरे एषः तत्र न आसीत्, अपि तु अहम् आसम्'' इति वदन् अग्रे आगतवान् शिलामुखः ।

''किं कस्यापि निन्दनेन ? भवान् एव वदतु । किं ते अस्माभिः अदृष्टपूर्वाणि विलक्षणानि आयुधानि धृतवन्तः आसन् ? अथवा तेषां वाहनभूतान् उष्ट्रान् दृष्ट्वा किं गण्डकमृगाः पलायितवन्तः ?'' इति अपृच्छत् जीवदत्तः ।

''आस्तां तावत् । किं गतस्य विषये चिन्तनेन ? तेभ्यः आक्रामकजनेभ्यः मोचयित्वा स्वर्णाचार्यस्य आनयनम् अस्माकं कर्तव्यम् । अतः भवन्तः सर्वासु दिक्षु गत्वा ते कुत्र गताः इति ज्ञात्वा आगच्छन्तु'' इति उक्तवान् खड्गवर्मा ।

अरण्यमल्लः झटिति अनुचरान् आज्ञापितवान् यत् शत्रवः कुत्र सन्ति इति ज्ञात्वा आगच्छन्तु इति ।

सूर्यास्तः आसन्नः । क्रमशः अन्धकार-

प्रसारस्यापि आरम्भः जातः । खड्गवर्मा जीवदत्तः च पाकं सज्जीकृत्य भोजनं कृत्वा कुटीरस्य पुरतः उपविष्टवन्तौ । तावता गण्डकजातीयः कश्चन भटः तत्र उपस्थितः । सः शत्रूणां स्थलं ज्ञात्वा आगतवान् आसीत् । सवेगप्रयाणकारणतः सः दीर्घश्वासोच्छ्वासं करोति स्म ।

तं दृष्ट्वा गण्डकजातीयानां राजा अरण्यमल्लः अपृच्छत् – ''किं भवद्भिः ते लुण्ठाकाः दृष्टाः ? भवता सह गताः अन्ये त्रयः क्व गताः ?'' इति ।

''पर्वतीयनद्याः अपरतीरे आक्रामकगणः प्रयाणं कुर्वन् अस्ति । एतत् निवेदयितुम् अहं वेगेन अत्र आगतः'' इति अवदत् सः गण्डकजातीयः भटः ।

''किं ते त्रयः इदानीम् अपि शत्रूणाम् अनुसरणं कुर्वन्तः सन्ति ?'' इति अपृच्छत् जीवदत्तः ।

''आं श्रीमन् ! यावत् वयं तत्र न गच्छामः तावत् ते अनुसरणम् अनुवर्तयन्तः भवन्ति'' इति अवदत् गण्डकजातीयभटः ।

तदा जीवदत्तः खड्गवर्माणम् अवदत् – ''मित्र ! इदानीम् एव इतः निर्गच्छाव तावत् । रात्रौ अन्धकारसमये एव अस्माभिः स च प्रदेशः अवश्यं प्राप्तव्यः । सूर्योदयाभ्यन्तरे स्वर्णाचार्यस्य विमुक्तिः कथमपि साधनीया'' इति ।

यदा तौ क्षत्रिययुवकौ धनुर्बाणादिकं गृहीत्वा ततः निर्गन्तुम् उद्युक्तौ तदा विघ्नेश्वरपूजकः उक्तवान् – ''अस्माकं सिंहेन भीमेन यः शत्रुभटः मारितः, तस्य वाहनम् उष्ट्रः



अत्रैव कुत्रचित् स्यात् । तम् आरुह्य गमनं वरम् । तेन प्रयाणं सुकरं स्यात् । अतः सः अन्विष्यताम्'' इति ।

एतदनुगुणं चत्वारः गण्डकजातीयाः उष्ट्रस्य अन्वेषणार्थं निर्गताः । अनतिदूरे एव कस्यचित् गुल्मस्य पार्श्वे सुप्तः उष्ट्रः तैः प्राप्तः । तं ते कुटीरसमीपम् आनीतवन्तः । आक्रामकाणां वार्ताम् आनीतवान् गण्डकजातीयः भटः अग्रे प्रस्थितवान् । क्षत्रिययुवकौ उभौ अपि उष्ट्रम् आरुह्य तम् अनुसृतवन्तौ ।

अरण्ये कस्याश्चित् नद्याः तीरे पर्वतमूले आक्रामकाः पाककार्ये मग्नाः तैः दृष्टाः । ते आक्रामकाः नितरां श्रान्ताः इव दृश्यन्ते स्म । केचन उष्ट्राणाम् आहारादिव्यवस्थापने निरताः आसन् । पुनः केचन शुष्ककाष्ठानां



सङ्ग्रहणार्थम् अरण्ये इतस्ततः सञ्चरन्तः तैः दृष्टाः ।

''स्वर्णाचार्यस्य का गतिः इति आदौ ज्ञातव्यम् अस्माभिः । अतः काष्ठसङ्ग्रहार्थम् अटत्सु शत्रुभटेषु कञ्चित् गृहीत्वा वस्तुस्थितिं जानीयाम'' इति जीवदत्तम् उक्तवान् खड्गवर्मा ।

''एषः उत्तमः उपायः अस्ति । भवान् एकं भटम् आत्मना सह नयतु । उपायेन कञ्चित् शत्रुभटं गृह्णातु । किन्तु अस्माकं व्यवहारः शत्रुभिः कथमपि न ज्ञायेत'' इति उक्तवान् जीवदत्तः ।

तदनन्तरं खड्गवर्मा केनचित् गण्डकजातीयेन सह ततः निर्गतवान् । अनतिदूरे काष्ठसङ्ग्रहे निरतः कश्चन शत्रुभटः तेन दृष्टः । 'अस्मान् सः यावत् न पश्येत् ततः पूर्वम् अस्माभिः सः ग्रहीतव्यः' इति चिन्तितवान् खड्गवर्मा ।

एतदर्थं तेन कश्चन उपायः चिन्तितः । सः गण्डकजातीयम् आज्ञापितवान् - ''भोः मित्र ! वृक्षं कञ्चित् झटिति आरुह्य शुष्कां काञ्चित् स्थूलां वृक्षशाखां सशब्दं पातयतु'' इति ।

गण्डकयुवकः तथैव कृतवान् । ततः तौ वृक्षाणां पृष्ठतः निलीय स्थितवन्तौ । शुष्कशाखापतनशब्दं श्रुत्वा आनन्दितः शत्रुभटः तस्याः सङ्ग्रहार्थं झटिति अग्रे गतवान् ।

यदा सः तां शाखां स्वीकर्तुम् अवनतवान् तदा खड्गवर्मा विनाशब्दं गत्वा कण्ठे तं गृहीतवान् । गण्डकजातीयः तस्य पुरतः स्थित्वा तस्य वक्षःस्थलं लक्ष्यीकृत्य शूलायुधं गृहीत्वा सङ्केतेन सूचितवान् यत् आक्रोशनं यदि क्रियेत तर्हि भवान् प्राणैः वियुक्तः स्यात् इति ।

भयेन कम्पमानस्य तस्य कण्ठं हस्तद्वयेन गृहीतवान् खड्गवर्मा आज्ञापितवान् - ''विना विरोधं विना शब्दं च आवाभ्यां सह आगच्छतु । यदि स्वपक्षीयाणाम् अवधानम् आकृष्टुं कोऽपि प्रयत्नः क्रियेत तर्हि भवान् प्राणैः वियुक्तः भवेत्'' इति ।

आक्रामकभटः विना विरोधं खड्गवर्माणम् अनुसृतवान् । स्वसमीपम् आगतं तं पृष्टवान् जीवदत्तः - ''भवन्तः अरण्यवासिनां क्षेत्रेषु सस्यानि नाशयित्वा धान्यानि लुण्ठयित्वा प्रतिगमनसमये स्वर्णाचार्यनामकं कञ्चित् गृहीत्वा नीतवन्तः खलु ? सः इदानीं कुत्र

अस्ति ? कुत्र स्थापितः सः ? कथम् अस्ति सः ?'' इति ।

आक्रामकभटः कम्पमानस्वरेण अपृच्छत् - ''वस्तुस्थितिः उक्ता चेत् किं भवन्तः मां बन्धविमुक्तं कुर्युः ?'' इति ।

''निश्चयेन भवन्तं बन्धविमुक्तं करिष्यामः'' इति अवदत् जीवदत्तः ।

''श्रीमन् ! सः 'मां रक्षन्तु, मां रक्षन्तु' इति बहुधा उच्चैः आक्रोशति स्म । अतः कुपितः अस्माकं नायकः तं धान्यगोण्यां पूरितवान् । इदानीं सः अस्माकं वस्तूनां राशौ क्वचित् स्यात् । इत्योऽप्यधिकम् अहं न जानामि । मम वचने विश्वसन्तु । मया यत् उच्यते तत् सत्यम् एव'' इति अवदत् सः आक्रामकभटः ।

''भवतः कथनं सत्यं वा न वा इति परीक्ष्य वयं ज्ञास्यामः । तावत् भवन्तम् अत्र वृक्षे बध्नीमः । भवान् कोलाहलं यथा न कुर्यात् तथा पत्रैः भवतः मुखं पूरयिष्यामः च'' इति अवदत् जीवदत्तः ।

ततः जीवदत्तखड्गवर्माणौ वृक्षम् आरुह्य नदीतीरप्रदेशं दृष्टवन्तौ । तदवसरे पर्वतस्थ-गुहातः ज्वलतः दीपदण्डस्य प्रकाशः खड्गवर्मणा दृष्टः ।

सः आश्चर्येण जीवदत्तम् अवदत् - ''मित्र ! तत्र पश्यतु । पर्वतस्थगुहायां दृश्यते दीपदण्डस्य कश्चन प्रकाशः ! तत्रैव कश्चन विकृतकायः पुरुषः अपि दृश्यते । तस्य समग्रं शरीरं रोममयं दृश्यते । तं मन्त्रदण्डेन निर्दयं प्रहरन् अस्ति अपरः विचित्रः कश्चन पुरुषः'' इति ।

जीवदत्तः अपि गुहादिशि परिशीलनदृष्टिं प्रसारितवान् । तेनापि विकृताकारः रोममय-शरीरः कश्चन विलक्षणः पुरुषः दृष्टः । मन्त्र-दण्डेन तं प्रहरन् कश्चन विलक्षणवेषः मान्त्रिकः अपि दृष्टः ।

जीवदत्तः खड्गवर्मा च तौ विचित्राकारौ पुरुषौ आश्चर्येण पश्यन्तौ आस्ताम् । तावता सः विकृताकारः उच्चैः आक्रोशनं कृतवान् । पर्वते तस्य प्रतिध्वनिः उत्पन्नः । सः गुहातः निर्गत्य आक्रामकगणम् अभिलक्ष्य वेगेन प्रस्थितवान् । तस्य ललाटे अग्निज्वालासदृशं किञ्चन अपूर्वं ज्योतिः पौनःपुन्येन प्रकाशते स्म । *(अनुवर्तते)*



महासंस्कृत्याः स्थूलदर्शनम्
प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

# १२. ध्रुवचरित्रम्



''तात ! ध्रुवस्य कथा प्रेरणादायिनी अस्ति । एतस्याः कथातः ज्ञायते यत् प्रार्थना भगवन्तम् अपि भक्तसमीपम् आनयति इति । अतः अहं चिन्तयामि यत् मया अपि तपः आचरणीयम् इति । किन्तु एतदर्थं मार्गदर्शनं भवता एव करणीयम् । भगवान् मम पुरतः प्रत्यक्षः भवेत् इति चिन्तनम् एव सन्तोषदायकम्'' इति हसन् देवनाथवर्यम् अवदत् सन्दीपः ।

''यः भगवत्साक्षात्कारं प्राप्तवान् सः एव भवतः मार्गदर्शनं कर्तुम् अर्हेत्, न तु मादृशः । अहं तु भगवन्तम् अधिकृत्य जानामि, तदपि किञ्चिदेव'' इति हसन् एव उक्तवान् देवनाथवर्यः ।

''किम् एतस्य तात्पर्यं तात ? किं भगवत्साक्षात्कारः अन्यः, भगवद्विषयकं ज्ञानम् अन्यत् ? तयोः कः भेदः ?'' - कुतूहलेन अपृच्छत् सन्दीपः ।

''तयोः अन्तरं तु आकाशपातालयोः इव । भगवतः विषये ज्ञानवन्तः स्युः बहवः । किन्तु भगवतः साक्षात्कारं तु विरलाः एव प्राप्नुवन्ति । अहं ग्रामे जातः । अध्ययनार्थं नगरम् आगतः । नगरं प्रति आगमनात् पूर्वं मया चाकलेहविषये बहुधा श्रुतम् आसीत् । सः फलरसेन निर्मीयते इति, तस्य वर्ण-रुचि-आकारादिविषयाः च मया ज्ञाताः आसन् । किन्तु नगरं प्रति आगमनस्य अनन्तरम् एव तस्य वास्तविकी रुचिः अवगता मया । एवं कस्यचित् विषये ज्ञानम् अन्यत्, तस्यैव अनुभवस्य प्राप्तिः अन्या । बुद्धिमतां भवतां मुखे दृष्टात् विकासात् अहं निश्चिनोमि यत् ज्ञानानुभवयोः भेदः स्फुटः इति'' इति अवदत् देवनाथवर्यः ।

किञ्चित्कालस्य मौनस्य अनन्तरं सः पुनः अवदत् - ''सन्दीप ! भवता प्रस्तुतं विषयं किञ्चित् परामृशाम तावत् । यद्यपि भगवतः साक्षात्कारः मया न प्राप्तः, तथापि अनुभव

# -गौरव-गाथा



...मात् वदामि - मनोरञ्जनार्थं कृतस्य तपसः कारणेन भगवान् प्रत्यक्षः न भवेद् इति । अनन्यश्रद्धया कृतः तपः एव फलं ददाति । भगवतः ऋते नान्यत् किञ्चित् इति भावः आवश्यकः । धनं, यशः इत्यादिभिः सः वशीकृतः न भवेत् । अन्यच्च, भगवत्-साक्षात्कारः एकस्मिन् जन्मनि न भवेदपि कदाचित् । ध्रुवस्य कथाम् एव परिशीलयाम तावत् । पूर्वजन्मनि सः भगवद्दर्शनाकाङ्क्षी बालकः आसीत् । एकदा सः स्वसमवयस्कस्य राजकुमारस्य मैत्रीं प्राप्तवान् । राजकुमारस्य वेषभूषादयः आचारव्यवहारादयः च तस्मै विशेषतः अरोचन्त । अतः सः चिन्तितवान् यत् राज-कुमारत्वप्राप्तिः सौभाग्यस्य विषयः इति । एषा क्षणिका इच्छा तं वशीकृतवती । अतः एव सः राजकुमारत्वं प्राप्तवान्, न तु भगवत्साक्षात्कारम् ।''

''किं ध्रुवः स्वपूर्वजन्मनां घटनाः जानाति स्म ?'' इति पृष्टवती चमेली ।

''न । अन्यस्य संन्यासिनः मुखात् तत् ज्ञातं तेन । सा च घटना एवम् -

एकदा सः केनचित् संन्यासिना सह गच्छन् आसीत् । तत्काले तस्य गर्वः आसीत् - 'अत्यल्पे एव वयसि अहम् आध्यात्मक्षेत्रस्य अग्रगण्यः अस्मि । यं प्राप्तुं शतशः वर्षाणि यावत् तपः क्रियते सः भगवत्साक्षात्कारः मया अल्पे एव वयसि प्राप्तः' इति । एतत् जानन् संन्यासी एकं मृद्राशिं दर्शयन् ध्रुवम् अपृच्छत् - 'ध्रुव ! वृक्षस्य अधः एषः मृद्राशिः कथम् उत्पन्नः इति किं भवान् जानाति ?' इति । 'न' इति उक्तवान् ध्रुवः । 'तर्हि शृणोतु । बहूनि वर्षाणि उपविश्य भवता तपः कृतं, शरीरत्यागः कृतः च । एषा घटना बहुवारं प्रवृत्ता । अतः भवतः अस्थ्नां राशिः एव एवं मृद्राशित्वेन परिणतः' इति । एतत् श्रुतवतः ध्रुवस्य महत् आश्चर्यम् । तस्य अहङ्कारः अपगतः ।

एषा काचित् कथा स्यान्नाम । तथापि इतः स्पष्टं यत् भगवतः साक्षात्कारः क्वचित् अनेक-जन्मसाध्यः, न तु एकजन्मसाध्यः इति'' इति उक्तवान् देवनाथवर्यः ।

बालाः देवनाथवर्यस्य कथनं शृण्वन्तः आसन् । भगवत्साक्षात्कारस्य प्रक्रियाम् अवगन्तुं प्रयतमानाः आसन् ते । देवनाथवर्यः न जानाति स्म यत् स्वस्य पृष्ठतः स्थित्वा स्नुषा जयश्रीः अपि सर्वं शृण्वती अस्ति इति । अतः यदा तया कथनम् आरब्धं तदा सः आश्चर्येण पृष्ठतः अपश्यत् । जयश्रीः अवदत् - ''अयम् अहङ्कारः क्वचित् भगवत्साक्षात्कारस्य प्राप्तेः अनन्तरम्



अपि भवति इति तु आश्चर्याय !'' इति ।

''सत्यम् । अत्र मानवस्वभावः एव कारणम् । मानवः विलक्षणः जीवी । परस्पर-विरुद्धस्वभावाः अपि एकस्मिन् एव जने दृश्यन्ते बहुधा । एकस्मिन् एव जने दया अपि दृश्यते, क्रोधोऽपि । यः स्वभावेन मूर्खः अस्ति सः एव क्वचित् महाबुद्धिमान् इव व्यवहरति इत्यपि वयं पश्यामः । परमज्ञानी अपि क्वचित् महामूर्खताम् अनुष्ठितवान् दृश्यते । एवम् एव आध्यात्मक्षेत्रे ऊर्ध्वस्थानं प्राप्तवान् अपि जनः क्वचित् सामान्य-जनः इव व्यवहरेत् अपि । ईश्वरसाक्षात्कारं प्राप्तवतां सर्वेषाम् अनुभवः समानः एव भवेत् इति नास्ति । पूर्णरूपेण भगवत्साक्षात्कारं प्राप्तवत्सु अहङ्कारः सर्वथा न भवति । भगवतः अङ्गभूतस्य, शरीरस्थस्य आत्मनः दर्शनं यैः सकृत् प्राप्तं तेषां व्यवहारे अहङ्कारादयः दोषाः दृश्यन्ते कदाचित् ।''

''एतस्य किम् उदाहरणम् ?'' - अपृच्छत् चमेली ।

''भवती विश्वामित्रवसिष्ठयोः कथां श्रुतवती स्यात् खलु ? वसिष्ठः महाज्ञानी । अतः सः पूर्णरूपेण भगवत्साक्षात्कारं प्राप्तवान् । विश्वामित्रः भगवन्तं द्रष्टुं राज्यभोगं परित्यज्य संन्यासी जातः । सः वसिष्ठं ईर्ष्यया वदति स्म यत् जनाः भवन्तम् इव माम् अपि प्रशंसेयुः इति । किन्तु आध्यात्मसिद्धिः ईर्ष्यया स्पर्धया वा न प्राप्यते खलु ? अतः वसिष्ठतुल्यत्वस्य प्राप्तौ विश्वामित्रस्य महान् क्लेशः आसीत् ।

कदाचित् सः वसिष्ठम् उक्तवान् यत् भवान् मां महर्षित्वेन प्रसिद्धीकरोतु इति । वसिष्ठेन एतत् न अङ्गीकृतम् । एतेन विश्वामित्रस्य कोपः प्रवृद्धः । क्रोधेन शत्रुभयेन च युक्तः जनः चित्तस्वास्थ्यं रक्षितुं न शक्नोति खलु ? विश्वामित्रविषये अपि एवम् एव जातम् । अतः विश्वामित्रः वसिष्ठं पुनः पुनः अनुरोधपूर्वकं वदति स्म - 'मां महर्षिं घोषयतु' इति । किन्तु वसिष्ठः एतत् न अङ्गीकरोति स्म ।

क्रुद्धः विश्वामित्रः वसिष्ठस्य अपमाननार्थं विविधान् प्रयासान् कृतवान् । वसिष्ठस्य पुत्रः अपि तेन मारितः । तथापि वसिष्ठः शान्तः एव आसीत् ।

एकस्यां रात्रौ विश्वामित्रः समाधिस्थितिमग्नः आसीत् । सः अचिन्तयत् - 'महर्षित्वप्राप्तौ वसिष्ठः एव विघ्नायते । अन्येषु महर्षिषु अङ्गीकारं दत्तवत्सु अपि एषः वसिष्ठः तत्पददानं निराकृतवान् । अतः मम महर्षित्वप्राप्तौ वसिष्ठः विघ्नकारकः' इति । क्रोधवशं गतः सः निर्णीतवान् यत् बाधाभूतः वसिष्ठः इहलोकात् एव निवारणीयः इति ।

अतः सः एकं परशुं गृहीत्वा वसिष्ठस्य आश्रमं गतवान् । कुटीरस्य अन्तः शान्तता अस्ति

वा न वा इति द्रष्टुं सः कुटीरभित्तौ कर्णं योजितवान् । तदा तेन अन्तः प्रचलन् वार्तालापः श्रुतः ।

अरुन्धती उक्तवती - ''विश्वामित्रः महत्त्वाकाङ्क्षी । तस्मै महर्षित्वं दत्तं चेत् का हानिः भवतः ? तत् दत्तं चेत् पीडादानं परित्यजेत् सः । तत् पदं प्राप्तुम् एव सः राज्यं स्वसुखं च परित्यक्तवान् खलु !'' इति ।

''अहम् इच्छामि यत् राज्यात् अपि महत्तरं वस्तु सः त्यजतु इति । राज्यं तु नाशवत् वस्तु । किं तस्य त्यागेन श्रेष्ठता ? स्वस्य अन्तः यः अहङ्कारः पिण्डीभूतः अस्ति तं सः त्यजतु इति मम इच्छा'' इति अवदत् वसिष्ठः ।

''भवतः मुखात् 'महर्षिरसि' इति वचनं निर्गच्छेत् इति निरीक्षते सः । तत् निर्गतं चेत् ईर्ष्यां परित्यज्य आध्यात्मिकसिद्धिं प्राप्तुम् अर्हेत् खलु सः ?'' इति उक्तवती अरुन्धती ।

''सः वस्तुतः महर्षिः एव । यावत् तदनुगुणा अर्हता तस्मिन् न उत्पद्यते ततः पूर्वम् एव सः आत्मानं महर्षिं न भावयेत् इति मम चिन्तनम् । ताम् अर्हतां प्राप्नोतु सः । तदा मम मुखात् यत् 'महर्षिरसि' इति वचनं निर्गच्छेत् तत् अपरिमितं सन्तोषं दद्यात् तस्मै । सः एव मां प्रशंसेत् अपि तदा'' इति उक्तवान् वसिष्ठः ।

एतत् श्रुतवतः विश्वामित्रस्य हस्तात् परशुः पतितः । वसिष्ठस्य वास्तविकंस्वरूपम् अवगतम् आसीत् तेन । अतः वसिष्ठविषयकः द्वेषभावः अपगतः, आदरश्च उत्पन्नः । सः अश्रूणि स्रावयन् अन्तः गत्वा वसिष्ठस्य पादौ गृहीतवान् । एतदनन्तरं तस्मिन् महत् परिवर्तनं जातम् । वसिष्ठस्य मार्गदर्शनेन सः आध्यात्मक्षेत्रे उन्नतस्थानं प्राप्तवान् ।

एवं कथां समाप्य अवदत् देवनाथवर्यः - ''अवगतं खलु एकं जनं जागरयितुं कियत्यः घटनाः प्रवर्तन्ते इति ! विश्वामित्रः आत्मनि स्थितम् आध्यात्मप्रकाशं द्रष्टुं न शक्नोति स्म । वस्तुस्थितिज्ञानात् तस्य सामान्यमानवस्तरः आध्यात्मकतेजसा प्रकाशितः जातः । सः महात्मा संवृत्तः'' इति ।

''किं वयम् एतादृशं महापुरुषत्वोपेतं जनम् अभिज्ञातुं शक्नुयाम ?'' इति अपृच्छत् सन्दीपः ।

''तत् तु तदा एव शक्यते, यदा भवान् आत्मानं स्वयं ज्ञास्यति । अद्य अलम् एतावता'' इति उक्त्वा उत्थितवान् देवनाथवर्यः ।



**Statement about Ownership of CHANDAMAMA (Sanskrit)**
Rule 8 (formVI), Newspaper (Central) Rules, 1956

| | |
|---|---|
| 1. Place of Publication | 82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |
| 2. Periodicity of Publication | MONTHLY<br>1st of each calendar month |
| 3. Printer's Name<br>Nationality<br>Address | B. VISWANATHA REDDI<br>INDIAN<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097. |
| 4. Publisher's Name<br>Nationality<br>Address | B. VISWANATHA REDDI<br>INDIAN<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |
| 5. Editor's Name<br>Nationality<br>Address | B. VISWANATHA REDDI (Viswam)<br>INDIAN<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |
| 6. Name and Address of individuals who own the paper | Chandamama India Ltd.<br>Board of Directors:<br>1. Vinod Sethi<br>2. B. Viswanatha Reddi<br>3. P. Sudhir Rao<br>82 Defence Officers Colony<br>Ekkatuthangal<br>Chennai-600 097 |

*I,* **B. Viswanatha Reddi,** *do hereby declare that the particulars given above are true to the best of my knowledge and belief.*

1st March 2001

B. VISWANATHA REDDI
*Publisher*

# विंशतितमे शतके भारतम्

## महाप्रजाप्रभुत्वोपेतदेशस्य कार्यशैली
## १९७७ - २०००

१९७५ तमे वर्षे या आपत्स्थितिः घोषिता तस्याः छाया १९७७ तमे वर्षे फेब्रवरीमार्च्मासयोः प्रवृत्ते निर्वाचने विशेषतः दृष्टा । काङ्ग्रेस्पक्षीयः त्रिंशद्वर्षीयः अखण्डशासनकालः समाप्तः जातः । काङ्ग्रेसेतरपक्षीयसर्वकारः अधिकारस्थानम् आगतः । काङ्ग्रेस्(ओ), भारतीयलोकदलम्, जनसङ्घः, समाजवादिपक्षः च जनतापक्षनामके नूतनपक्षे विलीनाः जाताः । मुरार्जीदेसायीवर्यः जनतापक्षस्य अध्यक्षः जातः । भूतपूर्वमन्त्री बाबूजगजीवनरामः काङ्ग्रेस्पक्षाय त्यागपत्रं समर्प्य 'डेमोक्रटिक् काङ्ग्रेस्'नामकं पक्षं विरचय्य जनतापक्षस्य सहकारी जातः । फेब्रवरी मासस्य १६ तः मार्च् १० दिनाङ्कपर्यन्तं प्रवृत्ते निर्वाचने जनतापक्षः, तत्सहकारिपक्षाः च बहुमतम् आसादितवन्तः । इन्दिरागान्धी रायबरेलीक्षेत्रे पराजिता जाता । मार्च्मासस्य २१ तमे दिनाङ्के आपत्स्थितिः अपसारिता । मार्च्मासस्य २४ तमे दिनाङ्के मुरार्जीदेसायीवर्यः प्रधानमन्त्रित्वेन शपथग्रहणम् अकरोत् ।

*मोरार्जिदेसायिवर्यः*

दशसु राज्येषु, केन्द्रशासितप्रदेशद्वये च काङ्ग्रेस्विरोधिवातावरणं परिदृष्टम् ।

जून्मासस्य २१ तमे दिनाङ्के एन्. सञ्जीवरेड्डिवर्यः भारतस्य षष्ठः राष्ट्रपतिः जातः ।

इन्दिरागान्धिवर्या कार्यकारिसमितितः निर्गच्छेत् इति वदन्तः बहवः तरुणसदस्याः काङ्ग्रेस्पक्षं परित्यक्तवन्तः । १९७७ तमे वर्षे त्रिपुरायाम्, अरुणाचलप्रदेशे, मेघालये, महाराष्ट्रे च काङ्ग्रेसेतरपक्षीयाः अधिकारसूत्रं गृहीतवन्तः ।

*एन्. सञ्जीवरेड्डिवर्यः*

# प्रथमः सम्मिश्रसर्वकारः

१९७९ तमवर्षस्य जुलैमासस्य ११ दिनाङ्के विरोधपक्षसदस्याः मोरार्जी-देसायीमहोदयस्य मन्त्रिमण्डले अविश्वासं प्रकटितवन्तः । सः जुलैमासस्य १५ दिनाङ्के त्यागपत्रं दत्तवान् । सहायक-प्रधानमन्त्री चरण-सिंहमहोदयः जनता-पक्षं त्यक्त्वा लोक-सभायां जनता(Secular)-दलस्य नेता अभवत् । जुलैमासस्य २८ तमे दिनाङ्के सः प्रथमं सम्मिश्रसर्वकारं रचितवान् । परन्तु सोऽपि सर्वकारः अल्पकालावधिकः एव अभवत् । अगस्त्मासस्य २० तमे दिनाङ्के चरणसिंहमहोदयः अपि त्यागपत्रं दत्तवान् । राष्ट्रपतिमहोदयः लोकसभां विसृष्टवान् ।



*चरणसिंहः*

सप्तमे लोकसभानिर्वाचने, यच्च १९८०तमे वर्षे जनवरीमासस्य २ दिनाङ्कतः ६ दिनाङ्कपर्यन्तं प्राचलत् तस्मिन्, इन्दिरागान्धिमहोदया विशिष्टबहुमतेन अधिकारे पुनरागता । ५२४ स्थानेषु काङ्ग्रेस्(ऐ)पक्षः ३५३ स्थानानि प्राप्नोत् । जनवरीमासस्य १४ दिनाङ्के इन्दिरागान्धिवर्यया प्रधानमन्त्रिपदवी प्राप्ता । कर्णाटकराज्ये, गोवाप्रदेशे, अरुणाचलप्रदेशे, हिमाचलप्रदेशे अपि काङ्ग्रेस्(ऐ)पक्षः स्वसामर्थ्यबलात्, पाण्डिचेरि-मणिपुर-हर्याणाप्रदेशेषु अन्यैः पक्षैः सह सम्मिल्य मन्त्रिमण्डलम् अरचयत् । मेमासस्य निर्वाचने गुजरात्, राजस्थानं, मध्यप्रदेशः, ओरिस्सा, उत्तरप्रदेशः इत्येतेषु काङ्ग्रेस्(ऐ) पूर्णबहुमतं, महाराष्ट्रे, पञ्जाबराज्ये च सामान्यबहुमतं च अलभत ।



*इन्दिरागान्धी*

एतन्मध्ये एप्रैल् ६ दिनाङ्के, अटल-बिहारीवाजपेयिमहोदयस्य अध्यक्षतायां नूतनः भारतीयजनतापक्षः स्थापितः ।

१९८२ तमवर्षस्य जनवरीमासस्य ९ दिनाङ्के अण्टार्कटिकाशीतप्रदेशे पादार्पणं कृत्वा, एस्. झड्. कासिम्महोदयस्य नेतृत्वेन, २१ सदस्यैः च युक्तं दलं भारतीये इतिहासे विशिष्टं स्थानम् अलभत । एकमासं तत्र उषित्वा 'दक्षिण-गङ्गोत्री'नामकः संशोधनविभागः स्थापितः तेन ।

१९८२ तमवर्षस्य जुलैमासस्य २५ दिनाङ्के सरदारजैलसिङ्गमहोदयः भारतसर्वकारस्य सप्तमाध्यक्षरूपेण निर्वाचितः ।



*जैल्सिंहः*

१९७७ तमे वर्षे प्रवृत्ते निर्वाचने जयं प्राप्य जम्मुकाश्मीर-प्रदेशस्य मुख्य-मन्त्रित्वं प्राप्तवतः शेक् अब्दुल्ला-महोदयस्य मरणा-नन्तरं, तस्य पुत्रः



फारुक्-अब्दुल्लः १९८२ तमवर्षस्य सप्टेम्बर्मासे पित्रा रिक्तीकृतां पदवीं स्वीकृतवान् ।

१९८३ तमवर्षस्य एप्रिल्मासस्य ३ दिनाङ्के यदा अकालीदलीयाः मार्गावरोधाभियानं ('रास्ता रोको' अभियानम्) चालितवन्तः । तदा पञ्जाबराज्ये कोलाहलः आरब्धः । अकालिदलम् अवदत् यत् १,००,००० सैनिकानाम् एकं सङ्घटनं विरचय्य स्वस्य युद्धम् अनुवर्तयिष्यामि इति । जर्नल्सिङ्ह भिण्ड्रन्वालानामकः उग्रगामिजनः सिक्खसिक्खेतरहिन्दूनां मध्ये कलहबीजम् उप्तवान् ।

फारुक्अब्दुल्लः



सः अमृतसरस्य सुवर्णमन्दिरे आश्रयं प्राप्तवान् । केन्द्रसर्वकारेण सह वार्तालापकरणप्रस्तावः अकालीदलाध्यक्षेण हरचन्दसिङ्ह लोंगोवालामहोदयेन निराकृतः ।

◆ १९७७ तमे वर्षे अण्टार्क्टिकां भारतीयमहिला एका प्रथमवारं गतवती । सा एव मेह मूस् ।

# प्रपञ्चस्य अन्येषु भागेषु...

❖ १९७९ तमे वर्षे मेमासस्य चतुर्थदिनाङ्के मार्गरेट् थ्याचर्, टोरिस्पक्षस्य नायिका



*मार्गरेट् थ्याचर्*

भूत्वा यदा ४३ मतानि अधिकतया प्राप्य यदा जितवती, तदा सम्प्रदायपालकपक्षः पुनः अधिकारं प्राप्नोत् । 'समग्रे युरोप्खण्डे एव एषा प्रधानमन्त्रिस्थानम् अलङ्कृतवती प्रथममहिला' इति ख्यातिं प्राप्तवती ।

❖ १९८० तमे वर्षे मास्को-ओलम्पिक्क्रीडा अमेरिकानायकत्वयुतैः ६० राष्ट्रैः बहिष्कृता आसीत् । एतस्य कारणं तु अफघानिस्थाने सोवियट्सेनाभागस्य निरन्तरोपस्थितिः । भारतं पुनः हाकीक्रीडायां सुवर्णपदकं जुलैमासस्य २९ तमे दिनाङ्के प्राप्नोत् ।

● १९७७ वर्षे विश्व-आरोग्य-सभया घोषितं यत् २००० तमवर्षात् पूर्वं सर्वेभ्यः आरोग्यं दास्यते इति ।

# अल्पवयस्कः प्रधानमन्त्री

१९८३ तमे वर्षे नूतनाः राजकीयपक्षाः उद्भूताः । अक्टोबर् ८ दिनाङ्के लोकदल-भारतीयजनतापक्षयोः मेलनात् राष्ट्रिय-प्रजातान्त्रिक-मैत्रीदलस्य उदयः जातः । अटलबिहारिवाजपेयी तस्य अध्यक्षः जातः ।

सप्टेम्बर्मासे जनतापक्षः काङ्ग्रेस्(एस्) प्रजातान्त्रिक-समाजवादिपक्षः, राष्ट्रिय-काङ्ग्रेस् इत्यादीनां मैत्रीकारणतः 'युनैटेड् फ्रण्ट्' निर्मितम् । जनतापक्षस्य अध्यक्षः चन्द्रशेखरवर्यः अस्य अध्यक्षत्वेन चितः ।

१९८४ तमवर्षस्य पूर्वार्धे पञ्जाब-राजकीयक्षेत्रे विशेषपरिवर्तनानि घटितानि । सुवर्णमन्दिरे स्थितान् भिन्द्रन्वालप्रभृतीन् उद्दिश्य 'शरणं गच्छन्तु' इति यत् सूचितं तद् अपुरस्कृतं जातम् । अखिलभारतीय-सिख्-विद्यार्थि-सङ्घटनं बहिष्कृतम् । मेमासे 'सुवर्णदेवालयं परितः विद्यमानं सेनाबलं प्रतिस्वीकरणीयम्' इति अकालिजनैः अनुरोधः कृतः । 'सिक्खानां कृते स्वतन्त्रं खलिस्थानं रचनीयम्' इत्यपि तैः अभ्यर्थितम् । सैन्येन नूतनकार्याचरणम् आरब्धं, यच्च 'आपरेशन् ब्लू स्टार्' इति उच्यते । अस्मिन् कार्याचरणे भिण्द्रन्वालः हतः । विद्यार्थिमहासङ्घस्य अध्यक्षः अम्रिक्सिङ्ग् अपि हतः जातः ।

सिख्जनसमुदायविरोधस्य प्रतिक्रियाः देशस्य विभिन्नेषु भागेषु दृष्टाः ।



राजीवगान्धिः

अक्टोबर्मासस्य ३१ दिनाङ्के स्वस्य अङ्गरक्षेषु अन्यतमयोः द्वयोः सिख्जनयोः गोलकास्त्रेण एव प्रधानमन्त्रिणी इन्दिरा-गान्धिवर्या मारिता । प्रधान-मन्त्रिपदस्वीकारार्थं राजीव-गान्धिवर्यः कलकत्तातः आगतः ।

अनन्तरदिनद्वये देहल्याम् उत्तरभारतस्य अन्यप्रदेशेषु च सिख्विरोधिजनैः मारणरूपेण विरोधः प्रदर्शितः । देहलीनगरे एव २००० अधिकाः सिख्पुरुषाः, महिलाः, बालाः च मारिताः ।

डिसेम्बर्मासे पञ्जाब्राज्यम् अस्सांराज्यं च विहाय अन्येषु प्रदेशेषु लोकसभानिमित्तं निर्वाचनं जातम् । आहत्य लोकसभास्थानानि ५०४ । तेषु ४०१ स्थानेषु काङ्ग्रेस्पक्षस्य जयः जातः । लोकसभानिर्वाचनेतिहासे एव एतादृशी सिद्धिः इतःपूर्वं दृष्टपूर्वा न आसीत् । डिसेम्बर्मासस्य ३१ दिनाङ्के राजीवगान्धिः प्रधानमन्त्री जातः । तदा तस्य वयः केवलं ४० वर्षाणि ।

भारतदेशः व्योमयानक्षेत्रस्य प्रवेशम् अकरोत् । भारतीयवायुसेनायाः स्क्व्याड्रन् नायकः राकेशशर्मा 'सोवियट् क्र्यू आप्



राकेशशर्मा

कास्मो नाट्स् जनैः सह सोयुझ् टि - ११ यानेन एप्रिल्मासस्य चतुर्थे दिनाङ्के १९८४ तमे वर्षे व्योमयानानुभवं प्राप्य सप्ताहानन्तरं प्रत्यागतः ।

सः आकाश-साहसानुभवं प्राप्तवत्सु भारतीयेषु प्रथमः, तथैव जगति १३८ तमः जातः ।

- भारतदेशेन निर्मितः प्रथमः स्वदेशीयः कृतकोपग्रहः भास्करः - १ सोवियट्तः १९७९ तमवर्षस्य जूनमासस्य ७ दिनाङ्के कार्यारम्भम् अकरोत् ।



प्रकाशपडुकोणे

- भारतस्य प्रकाशपडुकोणेमहाभागः १९७९ तमे वर्षे लण्डन्नगरे जागतिक-ब्याड्मिण्टन्स्पर्धायां विजेता जातः ।
- गङ्गानद्याः महात्मगान्धिसेतोः उद्घाटनं १९८२ तमवर्षस्य मार्च्मासस्य २ दिनाङ्के जातम् । जगति दीर्घतमस्य एतस्य सेतोः दैर्घ्यमस्ति ५.५५५ कि. मी. ।

# प्रपञ्चस्य अन्येषु भागेषु....

- यदा अमेरिकादेशेन प्रथमा व्योम-नौका 'कोलम्बिया' १९८१ तमे वर्षे एप्रिल्मासे प्रेषिता, तदा व्योमयानक्षेत्रे नूतनं पदं स्थापितम् अभवत् । राकेट्-अन्तः स्थित्वा विमानयानम् इव आकाशं गतः सः 'ग्लैडर्' इव भूमिमागतः ।

- १९८३ तमे वर्षे मार्च्मासस्य २३ तमे दिनाङ्के अमेरिकाध्यक्षः रोनाल्ड्



रोनाल्ड् रेगन्

रेगन्वर्यः राष्ट्रियसम्पर्कमाध्यमेषु नक्षत्र-युद्धकार्यक्रमम् उद्घोषितवान् । एतस्य उद्देश्यं तु अण्वस्त्रेभ्यः रक्षणार्थं देशस्य कवचनिर्माणम् आसीत् । अण्वस्त्र-युद्धाग्रणीनां सङ्ग्रहणे धैर्यम् अकरोत् एषः कार्यक्रमः ।

# पञ्जाबप्रदेशे न्यूनतापूरणम्

जगता कदापि न विस्मर्यते १९८४ वर्षस्य ३ दिनाङ्के प्रवृत्ता भोपालीया अनिल-दुरन्तघटना। कीटनाशकोत्पादनकार्यागारे मध्यरात्रस्य अनन्तरं लोथल्-अनिलस्य प्रस्रवणम् आरब्धम्। मध्यप्रदेशस्य राजधानी भोपालनगरम् अनिलसङ्ग्रह-केन्द्रवत् परिवर्तितम्। ३००० अधिकाः जनाः मरणं प्राप्तवन्तः। सहस्राधिकाः वसतिहीनाः जाताः। चिकित्सालयं प्रति नीताः केचन जीवनं कर्तुम् अशक्ताः जाताः।

'आपरेशन्-ब्लुस्टार्'कार्याचरणानन्तरं येषां सिख्जनानां विषये कठोरता प्रदर्शिता आसीत्, तेषाम् असन्तोषस्य निवारणार्थं केन्द्रं मार्गान्वेषणे उद्युक्तम् अभवत्। १९८५ तमवर्षस्य जुलैमासस्य २४ तमे दिनाङ्के प्रधानमन्त्री राजीवगान्धिः, लाङ्गोवालः इत्येताभ्याम् ऐतिहासिके पञ्जाब्शान्तिसन्धिपत्रे हस्ताङ्कनं कृतम्। लाङ्गोवालः सर्वकार-सिक्खजनसमुदाययोः सम्पर्कसेतुः आसीत्। किन्तु दौर्भाग्यवशात् सः एव सिक्खजनानाम् अप्रियः सञ्जातः। अगस्ट्मासस्य २० तमे दिनाङ्के यदा सः एव सङ्ग्रूरनगरे सभाम् उद्दिश्य भाषमाणः आसीत् तदा सिख्समानतार्थं प्रयतमानेषु केनचित् खलिस्थानप्रतिपादकेन मारितः। निर्वाचनं सप्टेम्बर्मासे प्रवृत्तम्। संयुक्त-अकालिदलेन निर्वाचनबहिष्कारार्थं जनाः अभ्यर्थिताः। परन्तु सिक्ख्मतीयः एव कश्चन गणः मतदाने भागम् ऐच्छत्। अकालिदलेन ७३ स्थलेषु, काङ्ग्रेस्(ऐ)पक्षेण ३२ स्थानेषु च जयः लब्धः। सुर्जित्सिङ्गबर्नालः मुख्यमन्त्रिपदव्यै चितः।

संसत्सदस्यानां राज्यसभीयानां च देश-त्यागस्य अवरोधं कर्तुं १९८५ तमे वर्षे भारतेन देशत्यागविरोधी नियमः व्यवहारपथम् आनीतः। भारतीये प्रजातान्त्रिकेतिहासे एषः ऐतिहासिकः नियमः १९८५ तमवर्षस्य जनवरीमासस्य ३० तमे दिनाङ्के कार्यान्वितः जातः।

भारतस्य अष्टमः राष्ट्रपतिः आर्. वेङ्कट-रामन्वर्यः १९८६ तमवर्षस्य जुलैमासस्य २५ तमे दिनाङ्के पदग्रहणं कृतवान्।



**आर्. वेङ्कटरामन्**

अरुणाचलप्रदेशः, मिझोरां च, यौ संयुक्त-संस्थानेषु अन्यतमौ आस्तां तौ, १९८७ तमे वर्षे फेब्रवरीमासस्य २० तमे दिनाङ्के स्वतन्त्र-राज्यस्थानं प्राप्तवन्तौ। मेमासस्य ३० तमे दिनाङ्के गोवा भारतस्य २५ राज्यत्वेन अङ्गीकृतम्। पूर्वं यौ पोर्चुगीस्शासनयुक्तौ आस्तां तौ डमन्-दीव्द्वीपौ एकीकृतौ। एकीकृतः स च प्रदेशः केन्द्रशासनाधीनत्वेन स्थितः।

श्रीलङ्कायां वर्धमानां समस्यात्मकस्थितिं मनसि निधाय प्रधानमन्त्री राजीवगान्धिवर्यः कोलम्बोनगरं गत्वा अध्यक्षेण जयवर्धनेवर्येण सह १९८७ तमवर्षस्य जुलैमासस्य २९ तमे दिनाङ्के सन्धिम् अङ्गीकृतवान्। तस्मिन्




उल्लिखितम् आसीत् यत् भारतस्य शान्तिसाधकदलमेकं श्रीलङ्कां प्रति प्रेषणीयम् इति, उत्तरपश्चिमीयप्रदेशे यत्र तमिल्जनाः आधिक्येन वसन्ति तत्र भारतस्य परिशीलकत्वं परिकल्प्य एव निर्वाचनं करणीयम् इति । तदा एव टुल्फ्पक्षं परित्यक्तवतः वि. प्रभाकरस्य नेतृत्वे एल्.टि.टि.ई.पक्षः संस्थापितः । अस्य कार्यकर्तारः श्रीलङ्कायाः सेनया सह युद्धे आत्मानं योजितवन्तः । भारतीया शान्तिसेना श्रीलङ्कायां वर्षद्वयम् अतिष्ठत् ।

- कल्कत्तानगरे विद्यमानायाः १९५० तमे वर्षे स्थापितायाः 'मिशिनरीस् आफ् चारिटि'संस्थायाः संस्थापकनिदेशिका मदर्तेरेसा १९७९ तमवर्षस्य अक्टोबर्मासस्य १७ दिनाङ्के नोबेल्शान्तिपारितोषिकं प्राप्नोत् । भारतस्य अत्युन्नतनागरिकप्रशस्तिं भारतरत्नं सा १९८० तमवर्षस्य जनवरीमासे प्राप्तवती ।



मदर् थेरेसा

# प्रपञ्चस्य अन्येषु भागेषु....

- १९८५ तमे वर्षे सोवियट्-शासकीयव्यवस्थायाः परिष्करणार्थम् अध्यक्षः मैखेल्गोर्बचेवः नूतनान् अंशान् योजयितवान् । तेषु प्रमुखाः मुक्तोपगमः (ग्लासनस्ट्), पुनर्निर्माणं (पेरेस्ट्रोयिका) चेति । तयोः परिणामः विकेन्द्रीकरणे परिमितमुक्तविपण्यां च दृष्टः ।



मैखेल् गोर्बचेवः

गोर्बचेवः अमेरिकाध्यक्षेण रोनाल्ड्-रेगन्वर्येण सह शस्त्रसङ्ग्रहण-स्पर्धा-नियन्त्रणस्य लाभालाभयोः विषये चर्चां कृतवान् ।

- सान्द्रमुद्रिका (CD) १९७८ तमे वर्षे पश्चिमजर्मनीदेशे ऐदम्प्राथम्येन निर्माय लोकाय अर्पिता ।



# सर्वकाराणाम् उत्थानपतनादीनि

१९८९ तमे वर्षे प्रवृत्ते सार्वत्रिकनिर्वाचने केनापि पक्षेण स्पष्टं बहुमतं न प्राप्तम् । इन्दिरा-काङ्ग्रेस्पक्षेण १९३ स्थानानि प्राप्तानि । जनतादलेन भा. ज. पक्षेण, मार्क्सवादि-कम्युनिष्ट्पक्षेण च क्रमशः १४१, ८८, ३२ स्थानानि च प्राप्तानि । नवम्बर् २९ तमे दिनाङ्के राजीवगान्धिमहोदयेन त्यागपत्रं दत्तम् । न्याषनल् फ्रण्ट्दलेन सर्वकार-रचनाय अभियाचना कृता । डिसेम्बर्मासस्य प्रथमदिनाङ्के जनतादलेन न्याषनल्फ्रण्ट्दलस्य सदस्यपक्षैः च सम्भूय वि.पि. सिंहमहोदयः नायकरूपेण चितः ।



वि. पि. सिंहः

सीपीएम्, सीपीआय्, आर्एस्पी-फारवर्ड्ब्लाक्-बीजेपीपक्षैः न्याषनल् फ्रण्ट्दलस्य बाह्यसमर्थनम् अङ्गीकृतम् । डिसेम्बर्मासस्य द्वितीयदिनाङ्के वि. पि. सिंहः प्रधानमन्त्रिरूपेण शपथग्रहणं कृतवान् । मण्डल-आयोगस्य प्रणिगदनं पुरस्कृत्य सर्वकारेण ये सामाजिकदृष्ट्या, शैक्षणिकदृष्ट्या च पृष्ठतः आसन्, तेभ्यः सर्वकारीयोद्योगेषु २७ प्रतिशतं स्थानानि आरक्षितानि । एतस्य विरोधरूपेण देशे सर्वत्र छात्राः प्रदर्शनं कृतवन्तः । केचन आत्मदहनम् अपि कृतवन्तः । १९९० तमे वर्षे आगष्ट्मासे सर्वकारेण एकमासं यावत् विद्यालयाः पिहिताः । एतत् आन्दोलनं क्रमशः देहलीतः देशस्य इतरेषु भागेषु अपि प्रसृतम् अभवत् ।

तन्मध्ये नवम्बर्-पञ्चमदिनाङ्के जनतादले विभागः अभवत् । ७० लोकसभासदस्याः पृथग्भूत्वा चन्द्रशेखरवर्यं नायकरूपेण चितवन्तः । भारतीय-जनतापक्षेण सर्वकाराय दत्तं समर्थनं प्रति-स्वीकृतम् । काङ्ग्रेस्(ऐ) पक्षेण चन्द्रशेखरवर्यस्य नेतृत्वे सर्वकाररचनार्थं समर्थनदानस्य प्रस्तावः कृतः । विश्वासमतप्राप्तौ वि.पि.सिंहवर्यः विफलः अभवत् इत्यतः सः त्यागपत्रं दत्तवान् । नवम्बर्मासस्य दशमे दिनाङ्के चन्द्रशेखरवर्यः अष्टमप्रधानमन्त्रिरूपेण अधिकारग्रहणं कृतवान् ।



चन्द्रशेखरः

चन्द्रशेखरवर्यस्य सर्वकारः अपि अल्पायुष्कः आसीत् । 'मन्त्रिमण्डले मत्पक्षस्य प्रातिनिध्यम् अल्पम् अस्ति' इति वदता काङ्ग्रेस्(ऐ)पक्षेण स्वस्य समर्थनं प्रति-स्वीकृतम् । मार्च्षष्ठे दिनाङ्के (१९९१तमे वर्षे) चन्द्रशेखरवर्यः त्यागपत्रं दत्तवान् ।

दशमलोकसभानिमित्तं घट्टद्वये निर्वाचनानि अभवन् । निर्वाचनसमये राजीवगान्धिवर्यः प्रवासं कुर्वन् मे-मासस्य २१ दिनाङ्के तमिळु-नाडुराज्यं प्राप्तवान् । तेन श्रीपेरम्बुदूरुनगरे एकस्यां महासभायां भाषणं करणीयम् आसीत् । वेदिकां प्रति गमनसमये कयाचित्



*पि. वी. नरसिंहरावः*

एल्.टि.टि.सम्बद्धया महिलया प्रयुक्तेन स्फोटकास्त्रेण राजीवगान्धिवर्यः मारितः अभवत् । या महिला स्फोटकास्त्रं प्रयुक्तवती सा एल्.टि.टि.ई. आत्माहुतिदलस्य सदस्या आसीत् । अतः निर्वाचनस्य द्वितीयघट्टः २० दिनानि यावत् व्याक्षिप्तः अभवत् । यदा फलितांशः प्रकटितः तदा काङ्ग्रस्(ऐ)पक्षेण तस्य मित्रपक्षैः च २२० स्थानानि प्राप्तानि । पी. वी. नरसिंहरावः काङ्ग्रेसपक्षस्य नायकः अभवत् । सः जून्मासस्य २१ दिनाङ्के प्रधानमन्त्रिरूपेण शपथग्रहणं कृतवान् ।

- २० भारतीयभाषासु गीतानि गीतवती इति कारणतः १९८४ तमे वर्षे प्रकटिते गिन्नीस्पुस्तके स्वरसाम्राज्ञ्याः लता-मङ्गेश्करवर्यायाः नाम उल्लिखितं जातम् ।



# प्रपञ्चस्य अन्येषु भागेषु....

- जगतः अत्यन्तं भीकरी आण्विक-दुरन्तघटना १९८६ तमे वर्षे एप्रिल्-मासस्य २६ तमे दिनाङ्के अभवत् । सोवियत्सङ्घस्य चतुर्षु केन्द्रेषु अन्यतमे अग्निकारणतः स्फोटनम् अभवत् । अणुविकिरणयुक्तेन धूमेन युरोपखण्डस्य बहवः देशाः प्रभाविताः अभवन् । भारते अपि तस्य परिणामः दृष्टः ।
- यदा 'गल्फ्युद्धम्' इति प्रसिद्धस्य युद्धस्य आरम्भः अभवत् तदा १९९० तमे वर्षे कुवैत्देशः इराक्देशस्य उपरि आक्रमणम् अकरोत् । अरबसंयुक्तसंस्थानस्य देशैः - 'इराकेण कुवैत्तः प्रतिगन्तव्यम्' इति अभियाचना कृता । सौदि-अरेबियादेशेन प्रार्थितम् इत्यतः अमेरिकादेशेन युद्धे प्रवेशः कृतः । अन्ते १९९१ तमे वर्षे फेब्रवरीमासे युद्धविरामः घोषितः ।

- स्वीडन्देशस्य एकया संस्थया ऐदम्प्राथम्येन सेल्युलर्-दूरवाण्यः परिचायिताः । (१९७९)



# रामजन्मभूमिविषये, जलबन्धविषये च विवादाः


शङ्करदयालशर्मा

उपराष्ट्रपतिः डा० शङ्करदयालशर्ममहोदयः १९९२ तमे वर्षे जुलैमासस्य १७ दिनाङ्के भारतस्य नवमः राष्ट्रपतिः अभवत् ।

उत्तरप्रदेशे अयोध्यायां विद्यमानस्य बाबरीयभवनस्य विवादः तदा अन्तिमघट्टं प्राप्नोत्, यदा १९९२ तमवर्षस्य डिसेम्बर्-मासस्य षष्ठे दिनाङ्के केचन करसेवकाः तस्य भवनस्य भागानां नाशनम् आरब्धवन्तः । विवादग्रस्ते स्थले पूर्वं राममन्दिरम् आसीत् उत न इति केचन विवादं कुर्वन्ति स्म । अपरः अपि वादः एवम् आसीत् - तत्र मोघलानां काले विद्यमानं राममन्दिरं नाशयित्वा बाबरीयभवनस्य निर्माणं कृतम् आसीत् इति । अयोध्याप्रकरणस्य परिणामाः समग्रे देशे दृष्टिगोचराः अभवन् । मतीयसङ्घर्षाः सर्वत्र अभवन् । सप्ताहाभ्यन्तरे राजस्थाने मध्यप्रदेशे च भारतीयजनता-पक्षीयाः सर्वकाराः पदच्युताः अभवन् । १९९३ तमे वर्षे महाराष्ट्रे महता प्रमाणेन भूकम्पः अभवत् । उस्मानाबाद्- लातूर-मण्डलद्वयस्य महती हानिः अभवत् । दशसहस्राधिकजनाः प्राणैः वियुक्ताः अभवन् ।

नर्मदानद्याः कृते निर्मितस्य सरदारसरोवर-जलबन्धस्य औन्नत्यवर्धनं करणीयम् इति गुजरातसर्वकारेण निश्चितम् । महाराष्ट्रे बहुधा तस्य विरोधः कृतः । 'महाराष्ट्रे महता प्रमाणेन अरण्यनाशः भवति, मानवजीवितस्य एव हानिः सम्भवति' इति वदन्तः परिसरप्रियाः महान्तं विरोधं कृतवन्तः । १९९३ तमे वर्षे महाराष्ट्रसर्वकारेण 'वसत्या वञ्चितानां कृते पुनर्वसतिकल्पनव्यवस्था यथायोग्यं करिष्यते' इति यदा आश्वासनं दत्तं तदा विरोधध्वनिः क्षीणः जातः ।

जम्मूकाश्मीरराज्ये भयोत्पादककृत्यानि न्यूनानि न जातानि । अतः १९९४ तमे वर्षे तत्र राष्ट्रपतिशासनं पुनरपि षण्मासान् यावत् विस्तारितम् । काश्मीरसमस्याम् अधिकृत्य अन्ताराष्ट्रियमानवाधिकारसङ्घटनद्वारा प्रस्तावं पारयितुं पाकिस्थानेन यदा प्रयासः कृतः (फेब्रवरी २६) तदा भारतेन विरोधः प्रकाशितः । एतद्विषये अन्यस्य माध्यस्थ्यं भारतेन न अङ्गीकृतम् ।

१९९५तमवर्षस्य जुलैमासे पहलगाँव्-प्रदेशे षट् विदेशीयपर्यटकान् निगृह्य भयोत्पादकाः स्ववशे स्थापितवन्तः । 'भारतीयकारागारे स्थापिताः १७ उग्रगामिनः बन्धमुक्ताः कृताः चेदेव एते परित्यज्यन्ते' इति भयोत्पादकैः उक्तम् । एतत् निराकुर्वता केन्द्रशासनेन उक्तं यत् कृते द्वाभ्याम्, अन्ये

सर्वे न काश्मीरीयाः, अपि तु अफगानिस्थान-पाकिस्थानयोः धनक्रीताः सैनिकाः इति ।

उग्रगामिनः १९९५तमवर्षस्य मेमासस्य ११ दिनाङ्के श्रीनगरसमीपे स्थितं 'चरारे शरीफ'नामकं यवनमन्दिरं दग्धवन्तः । तच्च मन्दिरं पाक्प्रोत्साहितैः उग्रगामिभिः आक्रान्तम् आसीत् मासद्वयं यावत् । १५ शतके सूफीसज्जनस्य शेक्नुरुद्दीन्नुरानीवर्यस्य स्मारकत्वेन तत् मन्दिरं निर्मितम् आसीत् । सः हिन्दु-मुस्लिम्-ऐक्यस्य निमित्तं प्रयासं कृतवान् आसीत् । हिन्दवः तं नन्दर्षिनाम्ना निर्दिशन्ति स्म । नवदशशतकस्य पञ्चमे दशके शेक्अब्दुल्लवर्यः तस्य पुनर्निर्माणं कृतवान् । ततः आरभ्य तत् हिन्दूनां मुस्लिमानां च पर्यटकानाम् आकर्षणकेन्द्रं जातम् आसीत् ।

- द्विसहस्रतमवर्षस्य जुलै-२४ तमे दिनाङ्के हैदराबादनगरे प्रवृत्तायाम् अन्ताराष्ट्रिय-चतुरङ्गस्पर्धायां एस्. विजयलक्ष्मीवर्या विजयं प्राप्य 'एतादृशं विजयं प्राप्तवत्सु प्रथममहिला' इति कीर्तिं प्राप्तवती ।



# प्रपञ्चस्य अन्येषु भागेषु....

- दक्षिणाफ्रिकादेशे स्वातन्त्र्यार्थं सङ्ग्रामं कुर्वतां कृष्णजनजातीयानां नायकत्वं निरूढवान् नेल्सन्मण्डेलावर्यः २६ वर्षाणि यावत् कारागारवासम् अनुभूय १९९० तमवर्षस्य फेब्रवरीमासस्य एकादशे दिनाङ्के कारागारात् मुक्तः जातः ।



- सोवियत्देशीयौ उभौ गगनयात्रिकौ १७५ दिनानि गगननौकायाम् एव वसन्तौ विश्वविक्रमं साधितवन्तौ । (१९७९)
- जपानदेशेन सज्जीकृतम् 'वाक्मन्'-नामकं श्रवण-साधनं १९७९ तमे वर्षे वाणिज्य-क्षेत्रं प्राविशत् ।



# अण्वस्त्रनिषेधसन्धिविषये भारतस्य विरोधः

१९९६ तमं वर्षं भारतदेशस्य दृष्ट्या अत्यन्तं विशिष्टम् आसीत् । यतः तस्मिन् वर्षे विविधैः कारणैः त्रयः प्रधानमन्त्रि-स्थानम् अलङ्कृतवन्तः आसन् । ११ तमे लोकसभानिर्वाचने काङ्ग्रेस्पक्षस्य बहुमतं लुप्तं जातम् । अतः नरसिंहराव्वर्यः त्यागपत्रं दत्तवान् । अधिक-मतानि प्राप्तानि इति कारणतः भा.ज.पक्षः अन्यैः ११ पक्षैः सह सम्मिल्य नूतनसर्वकारस्य रचनार्थं राष्ट्रपतेः अनुमतिम् अपृच्छत् । मेमासस्य १३ दिनाङ्के अटलबिहारि-वाजपेयिवर्यः नायकत्वेन चितः जातः । ततः सः मन्त्रिमण्डलं व्यवस्थापितवान् । किन्तु सः विश्वासमतस्य प्राप्तौ असमर्थः जातः । अतः मेमासस्य २८ तमे दिनाङ्के सोऽपि त्यागपत्रम् अददात् । तदनन्तरं १३ पक्षैः युक्तः संयुक्तगणः (युनैटेड् फ्रण्ट्) उद्भूतः । एच्. डि. देवेगौडवर्यः तस्य नायकत्वेन चितः । सः जूनमासस्य प्रथमे दिनाङ्के अधिकारसूत्रं गृहीतवान् ।



एच्. डि. देवेगौडः

जिनेवानगरे प्रवृत्तायां वैश्विकसभायां भारतदेशः जागतिक-अण्वस्त्र-परीक्षणा-निषेधसन्धेः (सि.टि.बि.टि) विषये विरोधम् प्राकटयत् । तत्र उक्तम् आसीत् यत् यावत् अण्वस्त्रोत्पादकराष्ट्रैः अण्वस्त्रोत्पादनस्थगनं न क्रियते तावत् एषः सन्धिः फलकारी न भविष्यति, यतः तादृशशस्त्रेभ्यः तृतीयगणीय-राष्ट्राणां भीतिः अनुवर्तिष्यते एव इति । भारत-देशस्य अयं वादः उत्तमप्रतिस्पन्दम् आप्नोत् । भारतं सन्धिपत्रे हस्ताङ्कनं निराकरोत् ।

१९९७ तमे वर्षे भारतेन द्वौ प्रधानमन्त्रिणौ दृष्टौ । एप्रिल्मासे ११ दिनाङ्के देवेगौडवर्येण (उपस्थापितां) विश्वासमतयाचन-प्रक्रियां लोकसभा निराकरोत् । ततः पूर्वं मार्च्-मासस्य ३० तमे दिनाङ्के कोङ्ग्रेस्-(ऐ)पक्षेण संयुक्तदलस्य कृते दत्तं स्वस्य अनुमोदनं प्रतिस्वीकृतम् । एप्रिल्मासस्य २१ तमे दिनाङ्के ऐ. के. गुज्राल्वर्यः संयुक्तदलस्य नायकत्वेन चितः । सः १२ तमः प्रधानमन्त्री जातः । तस्य मन्त्रि-मण्डलम् अपि अल्पायुष्कम् एव आसीत् । यतः नवेम्बर्मासस्य २८ तमे दिनाङ्के काङ्ग्रेस् (ऐ)पक्षः स्वस्य अनुमोदनं प्रतिस्व्यकरोत् । अतः गुज्राल्वर्यः त्यागपत्रम् अददात् । तस्य सूचनानुसारं राष्ट्रपतिः लोकसभां विसर्ज्य नूतनं



ऐ. के. गुज्राल्

निर्वाचनं घोषितवान् ।



१९९७ तमवर्षस्य जुलैमासस्य २५ तमे दिनाङ्के के. आर्. नारायणवर्यः देशमराष्ट्रपतित्वेन पदारोहणम् अकरोत् ।

१९९१ तमे वर्षे आत्महत्यादलीयैः राजीवगान्धिः यत्र मारितः तस्मिन् तमिळुनाडुराज्ये पुनरपि अन्या घोरहिंसाघटना प्रवृत्ता । १९९८ तमे वर्षे फेब्रवरीमासस्य १४ दिनाङ्के कोयम्बत्तूरुनगरे १८ विभिन्नेषु स्थलेषु स्फोटकास्त्रस्फोटनं जातम् । १८ हतभाग्याः घोरमरणं प्राप्तवन्तः । यस्मिन् स्थले भाजप-अध्यक्षेण श्रीयुतेन लालकृष्ण-अड्वानिवर्येण मतदानविषये भाषणं करणीयमिति निश्चितम् आसीत् तत्रैव एतत् जातम् । एतस्याः घटनायाः कर्तृत्वम् अङ्गीकृतं यवनोग्रवादिसंस्थया कयाचित् ।

के. आर्. नारायणन्

- क्रिकेट्-क्रीडायाः जागतिक-अन्तिम-स्पर्धायां ऐदम्प्राथम्येन भारतदेशः १९८३ वर्षस्य जून्-मासस्य २५ तमे दिनाङ्के विजयं प्राप्नोत् । लण्डन्नगरस्थे लार्ड्स्क्रीडाङ्गणे वेस्ट्-इण्डीस्विरुद्धं ४३ धावनाङ्कान् प्राप्य सः विजयम् आचरत् । (काकतालीयं नाम १९३२ तमे वर्षे जून्मासस्य २५ दिनाङ्के एव भारतेन ऐदम्प्राथम्येन इङ्ग्लेण्ड्विरुद्धं क्रीडितम् आसीत् ।)

# प्रपञ्चस्य अन्येषु भागेषु....

❖ यदा सोवियत्सङ्घस्य अङ्गभूताः विभिन्नाः देशाः स्वातन्त्र्यं प्राप्तवन्तः तदैव युरोप्देशे साम्यवाद(कम्युनिसं)-तत्त्वम् अस्तङ्गतं जातम् । अधिकार-परिवर्तनार्थं बोरिस्येल्स्टिन्वर्येण गोर्बचेवं प्रति महान् अनुरोधः कृतः । १९९१ तमे वर्षे डिसेम्बर्मासस्य २४ तमे दिनाङ्के येल्स्टिन्वर्यः रिपब्लिक्-रषियादेशस्य अध्यक्षः जातः ।



बोरिस् येल्स्टिन्

- १९८२ तमे वर्षे रिचर्ड् अटेनबरो-वर्यस्य निर्देशनेन युक्तं महात्मगान्धिचित्रं प्रदर्शितं जातम् । उत्तमचित्रत्वेन ख्यातेन एतेन चित्रेण अष्ट आस्कर्प्रशस्तयः प्राप्ताः । उत्तमनिर्देशनस्य, उत्तम-अभिनयस्य (बेन् किङ्स्ले अत्र मुख्य-पात्रं निरूढवान्) च निमित्तम् अपि एतेन प्रशस्तयः प्राप्ताः ।

# भारतेन स्वस्य अणुसामर्थ्यं परीक्षितम्



१९९१८तमे वर्षे भारते १२ लोकसभार्थं निर्वाचनं प्रवृत्तम् । केनापि राजकीयपक्षेण बहुमतं न प्राप्तम् । काङ्ग्रेस्(ऐ) पक्षः केवलानि १४१ मतानि प्राप्नोत् । २७७ स्थानेषु जयं प्राप्तवतः भाजप-नेतृत्वोपेतस्य पक्ष-समवायस्य नायकः जातः अटल् बिहारि-वाजपेयिवर्यः । सः मार्च्मासस्य १९ दिनाङ्के द्वादशप्रधानमन्त्रित्वेन शपथग्रहणं कृतवान् । मार्च्मासस्य २८ दिनाङ्के केवलानां १३ मतानाम् अन्तरेण सः विश्वासमतं सम्पादितवान् ।

*ए. बि. वाजपेयी*

राजस्थानस्य पोखरान्प्रदेशे १९९८ तमवर्षस्य मेमासस्य एकादशे दिनाङ्के भारतं पुनरेकवारम् अण्वस्त्रपरीक्षणम् अकरोत् । दूरनियन्त्रकसाधनद्वारा परीक्षणं कर्तुं भारतदेशः समर्थः अस्ति इति दर्शयितुं दिनद्वयस्य अनन्तरं पुनरेकवारं परीक्षणं कृतम् ।

१९९९ तमे वर्षे बिहार, आन्ध्रप्रदेशः, जम्मु काश्मीर, ओरिस्सा, देहली त्रिपुरा - इत्यादिषु उग्रगामिनां कार्याचरणम् अधिकं जातम् । डिसेम्बर्मासस्य २४ दिनाङ्के यदा नेपालस्य कठमण्डूतः देहलीं गच्छत् 'भारतीय-वायुयान'विमानम् अपहृतं तदा भारतदेशेन महान् आघातः प्राप्तः । परेद्यवि तत् विमानं अफघानिस्थानस्य कन्धहार्नगरे स्थगितम् । षड्दिनानां दीर्घप्रयत्नानन्तरं १८९ प्रयाणिकाः, उग्रगामिसङ्घटनीयाः केचन च विमुक्ताः जाताः ।

देहली-लाहोर-नगरयोः मध्ये लोकयान-सञ्चारस्य व्यवस्थां कर्तुं भारतदेशः, पाकिस्थान-देशः च अङ्गीकृतवन्तौ । १९९९ तमवर्षस्य फेब्रवरीमासस्य २० तमे दिनाङ्के प्रधानमन्त्री वाजपेयिवर्यः प्रथमप्रयाणम् अकरोत् । परेद्यवि सः देशयोर्मध्ये स्नेहसम्बन्धार्थं लाहोर्सन्धिपत्रे हस्ताङ्कनम् अकरोत् ।

किन्तु यदा काश्मीरसीमायां स्थितं कार्गिल्-प्रदेशं पाकिस्थानीयाः अतिक्रमणकारिणः प्राविशन् तदा मैत्रीसम्बन्धस्य भङ्गः जातः । प्रवेशं कृतवतां निष्कासनार्थम्, अन्येषां प्रवेशस्य निषेधार्थं च लघुयुद्धं करणीयमेव आपतितम् । १९९९ तमवर्षस्य मेमासस्य २६ दिनाङ्कतः ७४ दिनानि यावत् तत्र युद्धं प्राचलत् ।

एकस्य लोकसभास्थानस्य समर्थनम् आधिक्येन प्राप्तुम् असमर्थस्य वाजपेयि-सर्वकारस्य अधिकारः एप्रिल् १७ दिनाङ्के नष्टः । एप्रिल्मासस्य २६ तमे दिनाङ्के लोकसभा विसृष्टा जाता । सप्टेम्बर्मासे पञ्चसु स्थलेषु नूतननिर्वाचनं प्रवृत्तम् । भाजपनेतृत्वोपेतेन



राष्ट्रियप्रजातान्त्रिक-दलेन २६९ मतानि प्राप्तानि । 'तेलगुदेशं'-पक्षस्य अनुमोदनेन रा.प्र. दलस्य नायकः वाजपेयिवर्यः प्रधानमन्त्रित्वेन पुनः अधिकारं प्राप्नोत् । १९९९तम वर्षस्य अक्टोबर्मासस्य ३ दिनाङ्के सः ७० सदस्योपेतं मन्त्रिमण्डलं रचितवान् ।

- १९८५ तमे वर्षे जकार्तानगरे प्रवृत्ते 'एषियन् ट्र्याक्'-'फील्ड् मीट्'स्पर्धयोः भारतस्य प्रतिनिधिः पि. टि. उषा ५ सुवर्णपदकानि (एकं 'रिले'स्पर्धायाम्) एकं कांस्यपदकं च प्राप्तवती । एतत् भारतीयमहिलया प्रदर्शिता अद्वितीया सिद्धिः अस्ति ।



- २००० तम वर्षस्य डिसेम्बर्मासस्य २४तमे दिनाङ्के तेहरान्नगरे प्रवृत्तायां विश्वचतुरङ्ग-स्पर्धायां विश्वनाथ-आनन्दः विजयी जातः । एषियाखण्डे एतादृशं विजयं प्राप्तवत्सु सः एव अद्वितीयः ।



# प्रपञ्चस्य अन्येषु स्थलेषु....

- अमेरिकाध्यक्षस्य बिल्क्लिण्टन्वर्यस्य कारणतः ४५ वर्षेभ्यः अनुवर्तमानायाः प्यालेस्टिन्समस्यायाः परिहारार्थं सन्धिप्रयत्नाः आरब्धाः । १९९३ तमवर्षस्य सेप्टेम्बर्मासस्य १३ दिनाङ्के, इस्रेलीयः प्रधानमन्त्री यित्सक् राबिन्, प्यालेस्टिन्मुक्तिसभायाः अध्यक्षः यास्सर्-



अराफत् च निर्णीतवन्तौ यत् स्वतन्त्र-प्यालेस्टिन्निर्माणार्थं शान्तिसन्धिप्रयत्नाः अनुवर्तनीयाः इति ।

- उटाह्विश्वविद्यालयस्य आरोग्यकेन्द्रस्थैः वैद्यैः १९८२ तमे वर्षे डिसेम्बर्मासस्य २ दिनाङ्के एका यशस्विनी शस्त्रचिकित्सा कृता । फैबर्काचकं, पालियुरोथिन् इत्येताभ्यां निर्मितं कृत्रिमं हृदयं ६१ वर्षीयस्य शरीरे योजितं तैः ।



# भारतम् अनुमोदयतः अमेरिका रशिया च

२० तमशतकस्य अन्तिमे वर्षे जगतः द्वौ नायकौ भारतं सन्दृष्टवन्तौ । तौ च - अमेरिकायाः अध्यक्षः बिल्-क्लिण्टन्वर्यः, रशियाध्यक्षः व्लाडिमीर् पुटिन्वर्यः च । बिल्-क्लिण्टन्वर्यः मार्च्मासस्य १९, २० दिनाङ्कयोः अत्र आसीत् । गतेषु विंशतिवर्षेषु अमेरिकाध्यक्षः कोऽपि भारतं प्रति न आगतः आसीत् । पाकिस्थानस्य उग्रगामिनां समीप-प्रदेशस्य आक्रमणं कठोरशब्दैः निन्दता तेन उक्तं यत् भारत-पाकिस्थानयोः उद्विग्नता-निवारणदृष्ट्या निग्रहरेखाविषये आदरप्रदर्शनम् अनिवार्यम् इति ।



क्लिण्टन्

अक्टोबर्मासस्य २ दिनाङ्के दिनचतुष्टयस्य प्रवासं कर्तुम् आगतेन रशियाध्यक्षेण - भारत-पाकिस्थानयोः समस्याविषये विदेशीयानाम् अनधिकृतप्रवेशः खण्डितः । परस्परसहकार-वर्धनदृष्ट्या अवगमनसूचके सन्धिपत्रे रशिया-देशेन भारतेन च हस्ताङ्कनं कृतं, यत्र च उल्लिखितम् आसीत् यत् शान्त्युद्देशक-कार्यार्थम् एव अण्वस्त्रप्रयोगः करिष्यते इति ।

त्रयाणां नूतनराज्यानां रचना २००० तमवर्षस्य मुख्यभूता घटना । अक्टोबर्मासस्य ३१ तमे दिनाङ्के मध्यप्रदेशस्य छत्तिस्गडः नूतनराज्यत्वेन अस्तित्वं प्राप्नोत् । उत्तरप्रदेशस्य कानिचन उपमण्डलानि संयोज्य उत्तराञ्चलं रचितं नवेम्बर्मासस्य ८ दिनाङ्के । बिहारात् वियुक्तः झार्खण्डः भारतस्य २८ राज्यत्वेन नवेम्बर्मासस्य १४ दिनाङ्के स्थानं प्राप्नोत् । अर्धशतकात् पूर्वं रचितस्य भारतसंविधानस्य पुनः परिशीलनं करणीयम् इति विचार्य वाजपेयिसर्वकारेण ११ जनैः युक्ता राष्ट्रियसभा रचिता । फेब्रवरी-मासस्य १५ दिनाङ्के सर्वकारेण एषः निर्णयः स्वीकृतः यत् लोकसभायाः गात्र (५४५ स्थानोपेतम्) अग्रिमपञ्चविंशति-वर्षपर्यन्तं एवमेव भवतु इति ।

काश्मीरप्रदेशे उग्रगामिनां कार्याचरणम् अनुवर्तमानम् एव आसीत् इति कारणतः अस्मिन् वर्षे भारत-पाकिस्थानयोः सन्धान-क्रिया फलकारिणी न आसीत् । देशद्वयस्य सीमाप्रदेशे अपि सीमाक्रमणकार्याचरणानि दृश्यन्ते स्म । नवेम्बर्मासस्य नवदशे दिनाङ्के प्रधानमन्त्रिणा वाजपेयिमहोदयेन एकः दृढनिर्णयः घोषितः यत् पवित्रे रमझान्मासे जम्मुकाश्मीरप्रदेशे एकपक्षीयः सङ्क्रमविरामः भविष्यति इति । काश्मीरस्य स्वनिर्णय-विषयकाः ये संयुक्तसंस्थानस्य सङ्कल्पाः आसन् ते कालबाह्यताहेतोः अपुरस्काराार्हाः जाताः इति वदता प्रधानमन्त्रिणा डिसेम्बर्मासस्य २० तमे दिनाङ्के अग्रिमवर्षस्य गण-राज्योत्सवान्तं यावत् सङ्क्रमविरामः अनुवर्तितः ।



व्लाडिमीर् पुटिन्

(समाप्तम्)



# कवेः दौत्यम्

काञ्चनवर्मा काञ्चनपुरस्य राजा । येन केनचिदपि कारणेन प्रजानां कष्टं न भवेत् इत्येव तस्य चिन्तनं भवति स्म । बहुधा चिन्तनं कृत्वा सः नूतनान् परिष्कारांशान् व्यवहारपथम् आनीतवान् आसीत् । अतः प्रजाः सुखेन आसन् ।

एकदा निरञ्जननामकः कश्चन धनिकः वणिक् राजसभाम् आगत्य महाराजम् उद्दिश्य - ''जावाद्वीपतः अहं विशिष्टं सुगन्धद्रव्यम् आनीतवान् अस्मि । प्रथमं भवते तस्य समर्पणं मम कर्तव्यम् इति चिन्तयामि । भवान् कृपया एतत् स्वीकरोतु'' इति वदन् सुगन्धद्रव्यस्य एकां कूपीं राज्ञे समर्पितवान् ।

राजा सुगन्धम् आघ्राय अत्यन्तं सन्तुष्टः अभवत् । 'सर्वेषाम् उपरि सुगन्धद्रव्याणां सेचनं करोतु' इति सः सेवकं सूचितवान् । सेवकः तथैव कृतवान् । समग्रराजसभा सुगन्धयुक्ता अभवत् ।

तदा आस्थानकविः चन्द्रचूडः उत्थाय अवदत् - ''निरञ्जनेन आनीतं द्रव्यं न केवलं सुगन्धद्रव्यम्, अपि तु जावाद्वीपे प्रसृतायाः महाराजस्य कीर्तेः सुगन्धः'' इति ।

तत् श्रुत्वा सर्वे करताडनं कृतवन्तः । अत्यन्तं हृष्टः निरञ्जनः -''महाराज, कविवर्यस्य कथानुसारं भवतः कीर्तेः सुगन्धः एव मम वाणिज्यस्य आधारस्तम्भः । कविवर्यस्य वचनं नितरां सत्यम्'' इति अवदत् ।

राजसभायां प्रवृत्तायाः घटनायाः विवरणम् अन्तःपुरजनैः अपि ज्ञातम् । महाराज्ञी, तस्याः परिचारिकाः च मुक्तकण्ठेन सुगन्धद्रव्यस्य प्रशंसां कृतवत्यः । अग्रे 'काञ्चनवर्मसुगन्धद्रव्यम्' इत्येव तत् प्रसिद्धम् अभवत् । तेनैव नाम्ना तस्य विक्रयणम् अपि आरब्धम् ।

एकदा निरञ्जनः आस्थानकविं गृहं प्रति

'भामहः'

आहूय अवदत् – ''अहं स्वयं न जानामि यत् एतत् सुगन्धद्रव्यं कियत् प्रभावशालि इति । किन्तु भवतः प्रशंसावचनैः एव तस्य प्रसिद्धिः अधिका जाता अस्ति । काञ्चनवर्मणः नाम्ना एव तत् इदानीं प्रसिद्धम् अस्ति । तेन नाम्ना एव तस्य विक्रयणम् अपि प्रचलति । एतेन मया अपि बहु लाभः प्राप्तः अस्ति । प्राप्ते लाभे कञ्चन भागम् अहं भवते समर्पयितुम् इच्छामि'' इति ।

ततः सः कवये कौशेयवस्त्रं योग्यां दक्षिणां च दत्त्वा अवदत् – ''मम, मदीयवाणिज्यस्य च प्रशंसां कुर्वन् भवान् कविताः रचयतु । तेन जनानां मुखतः मद्विषये श्लाघनवचनानि निस्सरेयुः । एवं यदि भवेत् तर्हि अहं भवते अपूर्वं पारितोषिकं दास्यामि'' इति ।

निरञ्जनस्य वचनेन खिन्नः कविः चन्द्रचूडः निरञ्जनेन दत्तम् उपायनं प्रत्यर्पयन् अवदत् – ''महाशय, पिकः आम्रस्य किसलयं खादन् वसन्तमासमात्रे कूजति । यदा आकाशे विद्युत्सञ्चारः भवति तदा एव मयूरः नृत्यति । कविः उत्तमकाव्यानि रचनीयानि इत्याशया एव प्रशंसावचनैः गायति । भवादृशस्य स्वार्थिनः लोभिनः प्रंशसनार्थं सः कदापि न गायति । राज्ञा दोषः कृतः चेत् अपि तस्य निन्दनं कर्तुम् अहं सङ्कोचं न अनुभवामि । भवतः वाणिज्यस्य वर्धनार्थं मत्तः प्रयोजनं भवेत् इति कदापि मा चिन्तयतु'' इति ।

कवेः वचनं श्रुतवतः निरञ्जनस्य मुखं विवर्णम् अभवत् । किञ्चित्कालं सः स्तब्धः अभवत् । एषा वार्ता महाराजस्य काञ्चनवर्मणः कर्णपथम् आगता । सः कविं चन्द्रचूडम् आहूय– ''अहं श्रुतवान् यत् 'अहं दोषं करोमि चेत् अपि निन्दने भवान् सङ्कोचं न अनुभवति' इति । अहम् इदानीमेव भवन्तं कारागृहे स्थापयितुं शक्नोमि । भवान् किमपि कर्तुं न शक्नोति''इति अवदत् ।



चन्द्रचूडः उत्तरं दातुम् उद्युक्तः । तावता कश्चन मन्त्री उत्थाय अवदत् - ''महाराज, वेनदुर्योधनादीनां दुर्गुणान् कविः स्पष्टरूपेण स्वकाव्येषु कथितवान् इत्यतः तेषां वास्तविकरूपं जनैः ज्ञातम् । महाभारतस्य रचयित्रा धर्मराजस्य गुणगानं कृतम् इत्यतः धर्मराजस्य श्रेष्ठता सर्वैः विदिता । तथैव कीचकसदृशस्य स्त्रीलोलुपस्य विषये अपि । एतस्मात् स्पष्टं यत् 'न केवलम् उत्तमानां विषये, दुष्टानां विषये अपि कथनस्य सामर्थ्यं कवीनां भवति' इति । एषः एव आशयः एतेन प्रकटीकृतः'' इति ।



कविः अपि मन्त्रिणः वचनं समर्थितवान् । तदा राजा शान्तः अभवत् । एतस्याः घटनायाः अनन्तरं कदाचित् निरन्तरं चत्वारि वर्षाणि यावत् राज्यम् अनावृष्ट्या ग्रस्तम् अभवत् । निरञ्जनः वाणिज्ये महतीं हानिं प्राप्तवान् । अतः सः वाणिज्यार्थम् अन्यं देशं गन्तुम् इष्टवान् । तदा एव प्रतिवेशिनः कल्याणराज्यस्य राजा शक्तिसिंहः काञ्चनपुरस्य उपरि आक्रमणं कर्तुं प्रयत्नम् आरब्धवान् । अन्यः मार्गः न अवशिष्टः इत्यतः काञ्चनवर्मा शक्तिसिंहेन सह सन्धिप्रस्तावं कर्तुम् इष्टवान् । अतः सः मन्त्रिणः सूचनानुसारं चन्द्रचूडं राजदूतरूपेण कल्याणदेशं प्रेषितवान् ।

कल्याणदेशस्य राजा शक्तिसिंहः चन्द्रचूडम् उक्तवान् - ''भवतां देशः अस्माकं देशेन योजनीयः इति मया निर्णयः स्वीकृतः अस्ति । भवान् कविः खलु ? अस्मिन् विषये भवतः मतम् अहं ज्ञातुम् इच्छामि । भवान् निन्दति चेदपि वयं भवतां देशं तु स्वायत्तीकुर्मः एव'' इति ।

तदा चन्द्रचूडः हसन् उत्तरम् उक्तवान् - ''मया इतोऽपि अस्माकं देशस्य राज्ञः सन्देशः एव न श्रावितः । ततः पूर्वमेव भवान् स्वमतं प्रकटितवान् खलु ? अस्माकं देशः दुःस्थितौ अस्ति इति तु सत्यमेव । रक्तपातं विना भवदधीनाः भवितुम् इच्छामः वयम् । भवतः वचनानि मया ध्यानपूर्वकं श्रुतानि । काञ्चनपुरस्य नागरिकः सन् अहं किञ्चित् वक्तुम् इच्छामि । गृहस्य द्वाराणि उद्घाटितानि यदा भवन्ति तदा कश्चित् शुनकः प्रविशति चेत् वयं किं कर्तुं शक्नुमः ? यद्यपि इदानीं वयं भवतां पुरतः नतमस्तकाः स्मः, तथाऽपि कदाचित् वा अस्माकं देशतः भवतां निष्कासने अस्माकं सामर्थ्यं भवेत् एव ।

वयं देशभक्ताः । अस्माकं महाराजेन पर्याप्त-मात्रेण देशभक्तिः पाठिता अस्ति'' इति ।

तस्य वचनं श्रुत्वा शक्तिसिंहः यद्यपि आत्मानं नियन्त्रयितुं न शक्तवान्, तथापि कवेः हानिं कामपि न कृतवान्, यतः कविः राजदूतरूपेण आगतवान् आसीत् । ततः प्रत्यागत्य चन्द्रचूडः राजानं पूर्णं विवरणम् उक्तवान् । शक्तिसिंहस्य अहङ्कारयुतैः वचनैः काञ्चनवर्मा खिन्नः अभवत् । सः युद्धं कर्तुं निश्चितवान् । 'जयः वीरस्वर्गप्राप्तिः वा भवतु, युद्धकरणमेव उचितम्' इति तस्य अभिप्रायः आसीत् ।

शक्तिसिंहस्य पुरतः चन्द्रचूडेन कृतं देशभक्तिपूर्णं भाषणं जनान् प्रभावितान् अकरोत् । जनेषु देशभक्तिभावना जागरिता । तैः अपि प्रतिज्ञा कृता - 'जयः पराजयः वा भवतु नाम, वयं राज्ञः सहपथिकाः सन्तः तस्य समर्थनं करिष्यामः' इति । निरञ्जनः अपि विदेशतः नित्यावश्यकवस्तूनि आनाय्य न्यूनमूल्येन विक्रयणम् आरब्धवान् ।

काञ्चनपुरस्य जनैः कृतां प्रतिज्ञां, ततः जातं देशभक्तेः जागरणं च ज्ञात्वा शक्तिसिंहस्य राज्ये चर्चा आरब्धा । ''अस्माकं राजा यदि इदानीं काञ्चनपुरस्य उपरि आक्रमणं करोति तर्हि तस्य पराजयः निश्चितः'' इति वदन्ति स्म जनाः ।

गुप्तचरद्वारा शक्तिसिंहेन अपि स्वस्य देशस्य जनानाम् अभिमतम् अवगतम् । स्वस्य दोषं ज्ञात्वा सः राजदूतद्वारा कल्याणवर्मणे सन्देशं प्रेषितवान् - ''अहं भवतः राज्यस्य उपरि आक्रमणं न करिष्यामि । अहं भवतः स्नेहम् इच्छामि । इदानीं भवतां देशः अभावग्रस्तः अस्ति । भवतः प्रजाभ्यः आवश्यकखाद्यवस्तूनि प्रेषयन् अस्मि । यत् प्रवृत्तं तत् कृपया विस्मरतु'' इति ।

स्वस्य वचनानुसारं शक्तिसिंहः काञ्चन-वर्मणे आवश्यकखाद्यवस्तूनि प्रेषितवान् । आजीवनं सः स्नेहस्य निर्वहणं कृतवान् । चन्द्रचूडस्य दौत्यस्य प्रशंसां च कृतवान् । आस्थानकविः चन्द्रचूडः किञ्चित्कालानन्तरं स्वस्य देशस्य राज्ञः साहसमनोभावम् उदारतां च प्रशंसन् एकं काव्यं रचितवान् ।



## ६०. भीष्मस्य मृत्युः

# महाभारतम्

युधिष्ठिरः आरम्भे राज्यं दापितवत्सु प्रमुखाय कृष्णाय स्वस्य कृतज्ञताः समर्प्य तस्य स्तुतिं कृतवान् । अनन्तरं भ्रातॄन् सम्बोधयन् - ''प्रियभ्रातरः, मम कारणतः भवद्भिः कष्टानि अनुभोक्तव्यानि अभवन् । सामान्याः तावत् कष्टम् अनुभोक्तुं न शक्नुवन्ति । वयम् इदानीं विजयिनः । भवन्तः कानिचन दिनानि विश्रान्तिम् अनुभवन्तु । पुनः वयं मिलाम'' इति अवदत् ।

युधिष्ठिरः धृतराष्ट्रस्य अनुमतिं स्वीकृत्य दुर्योधनस्य भवनं दासैः सह भीमस्य निवासार्थं दत्तवान् । तथैव दुश्शासनस्य भवनम् अर्जुनाय, दुर्मर्षण-दुर्मुखयोः भवने नकुल-सहदेवाभ्यां च दत्तवान् । सर्वे स्वभवनं प्रविष्टवन्तः । कृष्णः सात्यकिः च अर्जुनस्य भवने वासं कृतवन्तौ ।

केषाञ्चित् दिनानाम् अनन्तरं युधिष्ठिरः कृष्णं द्रष्टुं गतवान् । सः कृष्णम् उद्दिश्य - ''वयं राज्यं प्रतिष्ठां च प्राप्तवन्तः । तथाऽपि अस्माकं मनसि अपराधिभावः अस्ति यत् धर्मविरुद्धम् आचरणं वयं कृतवन्तः इति । अतः बहुदिनतः मम मनः अशान्तम् अस्ति । तस्मात् कृपया भवान् मम सन्देहस्य परिहारं करोतु'' इति ।

कृष्णः किञ्चित्कालं विचिन्त्य - ''अहं भीष्मस्य विषये चिन्तयन् अस्मि । सः





सर्वधर्माणां ज्ञाता अस्ति । शरशय्यायाः उपरि शयानः सः यदि मृत्युवशः भविष्यति तर्हि तदीयं ज्ञानं नष्टं भविष्यति खलु । अतः भवान् शीघ्रं तस्य समीपं गच्छतु । ततः विषयान् सङ्गृह्णातु । तस्मात् ज्ञानं नष्टं मा भवतु इत्येव मम अपेक्षा'' इति अवदत् ।

तदा युधिष्ठिरः – ''भीष्मस्य विषये भवतः मनसि ये विचाराः आगताः ते एव मम मनसि अपि आगताः । भवान् एव मां तस्य समीपं नयतु । प्रायशः सः भवन्तम् अपि द्रष्टुम् इच्छन् स्यात्'' इति उक्तवान् ।

तदा कृष्णः सात्यकिं प्रति – ''वयम् इदानीमेव भीष्मं द्रष्टुं गच्छन्तः स्म । रथं सज्जीकरोतु'' इति अवदत् । अनन्तरं सात्यकिः कृष्णेन सह, अर्जुनः युधिष्ठिरेण सह, सहदेवः नकुलेन सह च पृथक् पृथक् रथे उपविश्य भीष्मसमीपम् आगताः । कृपाचार्यः, युयुत्सुः, सञ्जयः च तत्र आगतवन्तः । मार्गे तैः पञ्च कुण्डानि दृष्टानि । ''एतानि परशुरामकुण्डानि । परशुरामः एकविंशतिवारं भूप्रदक्षिणं कृत्वा क्षत्रियान् अन्विष्य तेषां वधं कृतवान् । तदा एतानि कुण्डानि रक्तैः पूर्णानि अभवन् । तदा परशुरामः तेन रक्तेन पित्रे तर्पणं दत्तवान् । एवं तस्य क्रोधाग्निः शान्तः अभवत्'' इति कृष्णः युधिष्ठिरम् अवदत् ।

युधिष्ठिरः परशुरामस्य विषये अधिकं विवरणं पृष्टवान् । तदा कृष्णः परशुरामस्य वृत्तान्तं श्रावितवान् –

जह्नुनामकस्य राजर्षेः वंशे गाधिः जन्म प्राप्तवान् । तस्य पुत्री सत्यवती । गाधेः पुत्रः न आसीत् । भृगोः पुत्रेण ऋचीकेण सह सत्यवत्याः विवाहः अभवत् । ऋचीकः स्वस्य श्वशुरस्य च पुत्रसन्तानं भवतु इत्याशया निष्ठापूर्वकं हविषः निर्माणं कृतवान् । ऋचीकः तस्य भागद्वयं कृत्वा सत्यवतीम् उद्दिश्य – ''एतं भागं भवती मात्रे ददातु । अपरं भवती स्वयं खादतु । एतेन भवत्याः मातुः गर्भतः कश्चन पराक्रमी पुत्रः उत्पन्नः भविष्यति । सः क्षत्रियाणां नाशं कृत्वा राजा भविष्यति । भवत्याः गर्भात् परमशान्तस्वभावयुक्तः पुत्रः उत्पन्नः भविष्यति'' इति अवदत् ।

सत्यवती एतत् अङ्गीकृतवती । एतस्याः घटनायाः अनन्तरं कदाचित् सत्यवत्याः मातापितरौ तीर्थयात्रां कुर्वन्तौ ऋचीकस्य आश्रमं प्रति आगतवन्तौ ।

सत्यवती पत्या उक्तं सर्वं मातरं निवेदितवती । पत्या सज्जीकृतं हविषः भागद्वयं मातुः हस्ते दत्तवती च । अनवधानेन सत्यवती स्वयं यत् खादनीयम् आसीत् तत् मात्रे दत्त्वा, मातुः निमित्तं सज्जीकृतं स्वयं खादितवती । ततः अरण्यतः प्रत्यागतः ऋचीकः प्रवृत्तं सर्वं ज्ञात्वा सत्यवतीम् उद्दिश्य – "भवत्याः मात्रा यः दोषः कृतः तेन भवत्याः गर्भतः अत्यन्तं कठोरस्य क्षत्रियस्य कस्यचित् जन्म भविष्यति । भवत्याः मातुः गर्भात् एकस्य ब्राह्मणस्य जन्म भविष्यति" इति उक्तवान् ।

अत्यन्तं दुःखिता सत्यवती प्रार्थनापूर्वकं निवेदितवती – "भवान् स्वस्य तपसः शक्त्या मम गर्भतः कठोरस्वभाववतः जन्म यथा न स्यात् तथा करोतु कृपया । अहं मम जीवितकाले तादृशं पुत्रं द्रष्टुं न शक्नोमि । कृपया कृपां प्रदर्शयतु" इति । 'तथैव करोमि' इति ऋचीकः वचनं दत्तवान् ।

अनन्तरं सत्यवत्याः गर्भतः शान्तस्वभाववतः जमदग्नेः जन्म अभवत् । गाधेः पत्न्याः गर्भतः विश्वामित्रस्य जन्म अभवत् । जमदग्नेः पुत्रः परशुरामः । यदा परशुरामः प्रौढः अभवत् तदा महादेवस्य आराधनां कर्तुं गन्धमादनपर्वतं प्रति गतवान् । महादेवस्य अनुग्रहस्य द्वारा सः अनेकानि अस्त्राणि परशुं च प्राप्तवान् ।

तेषु दिनेषु हैहयवंशीयस्य कृतवीर्यस्य पुत्रः अर्जुनः दत्तात्रेयस्य अनुग्रहेण सहस्रं हस्तान् प्राप्तवान् । सर्वाणि राज्यानि पराजित्य सः अश्वमेधयागं कृतवान् । ब्राह्मणेभ्यः दानं



कृतवान् च ।

यदा अग्निदेवः तस्य प्रदेशस्य ज्वालनम् आरब्धवान् तदा क्रुद्धः वसिष्ठः शापं दत्तवान् – "यथा अग्निना मम आश्रमस्य ज्वालनं कृतं तथा परशुरामः भवतः हस्तानां नाशं करिष्यति" इति । शापं श्रुत्वा अर्जुनः किञ्चित् अपि विचलितः न अभवत् ।

वस्तुतः परशुराम-कार्तवीर्यार्जुनयोः वैरस्य कारणं – कार्तवीर्यार्जुनस्य पुत्राः । ते अहङ्कारिणः दुष्टाः च । कदाचित् ते सञ्चरन्तः परशुरामस्य आश्रमं गतवन्तः । परशुरामस्य अनुपस्थितौ ते बलात् परशुरामस्य वत्ससहितां होमधेनुम् अपहृतवन्तः । क्रुद्धः परशुरामः कार्तवीर्यार्जुनस्य सहस्रहस्तान् कर्तयित्वा सवत्सां होमधेनुं प्रत्यानयत् ।

तूष्णीं स्थातुम् अशक्ताः हैहयाः एकदा

आश्रमे परशुरामम् अनुपस्थितं दृष्ट्वा आश्रमस्य उपरि आक्रमणं कृतवन्तः । परशुरामस्य पितुः जमदग्नेः शिरः कर्तितवन्तः च । एतेन अतीव क्रुद्धः परशुरामः - ''एतस्य वंशस्य नाशं करिष्यामि'' इति प्रतिज्ञां कृतवान् ।

तदा सः न केवलम् अर्जुनस्य पुत्राणां पौत्राणां च, अपि तु पृथिव्यां यत्र यत्र क्षत्रियाः दृष्टाः तेषां सर्वेषां हननं कृतवान् । बहूनि दिनानि यावत् परशुरामस्य क्षत्रियहननप्रक्रिया प्राचलत् ।

क्षत्रियाणां हननेन शान्तः परशुरामः किञ्चित् वनं गत्वा तपस्याम् आरब्धवान् । एकदा विश्वामित्रस्य पुत्रः परावसुः परशुरामस्य समीपं गत्वा अवदत् - ''भवान् सर्वेषां क्षत्रियाणां हननस्य प्रतिज्ञां कृतवान् । किन्तु भवतः प्रतिज्ञा पूर्णा न अभवत् । प्रतर्दनादयः क्षत्रियाः इदानीमपि जीवन्ति । तादृशी प्रतिज्ञा भवता न करणीया आसीत्, यां च भवान् पूर्णां कर्तुं न शक्नोति'' इति ।

परावसोः वचनं श्रुत्वा अत्यन्तं क्रुद्धः परशुरामः पुनश्च आयुधधारणं कृतवान् । तदा सः वृद्धान्, बालान्, गर्भस्थपिण्डानि चापि हन्तुम् आरब्धवान् । एवम् एकविंशतिवारं भूप्रदक्षिणं कृत्वा विश्वस्य सर्वान् क्षत्रियान् सः मारितवान् । अनन्तरम् अश्वमेधयागं कृत्वा सम्पूर्णपृथिव्याः उपरि अधिकारं स्वायत्तीकृत्य कश्यपाय समग्रं दानरूपेण दत्तवान् ।

कश्यपः भूमिं दानरूपेण स्वीकुर्वन् परशुरामम् उद्दिश्य - ''परशुराम, अहं भवते केवलाय उपवेशनाय स्थलं ददामि । भवान्



तत्रैव उपविश्य तपस्यां करोतु'' इति उक्तवान् । कश्यपेन नियुक्तानां ब्राह्मणानां शासने सर्वत्र अराजकता प्रसृता । बलशालिनः दुर्बलानां पीडनम् आरब्धवन्तः । तदा कश्यपः एतं विषयं ज्ञात्वा पृथिव्याः उपरि शासनार्थं क्षत्रियाणाम् अन्वेषणं कृतवान् । तदा तेन अनेके क्षत्रियाः दृष्टाः । कतिचन हैहयान् तेषां मातरः गुप्तरूपेण रक्षितवत्यः आसन् । पुरुवंशीयः विदूरथः ऋक्षपर्वते आश्रयं प्राप्तवान् आसीत् । सौदासनामकं क्षत्रियं पराशरः रक्षितवान् आसीत् । शिबेः पुत्रं धेनवः रक्षितवत्यः आसन् । अतः तस्य नाम गोपतिः इति प्रसिद्धम् । प्रतर्दनस्य पुत्रः वत्सः अपि जीवति स्म । गुप्तनामकं क्षत्रियं गौतमः आश्रयं दत्त्वा रक्षितवान् आसीत् । बृहद्रथं वानराः रक्षितवन्तः आसन् । मरुद्-



वंशीयान् क्षत्रियपुत्रान् समुद्रः रक्षितवान् आसीत् । एवं ये क्षत्रियाः नानाविधकारणैः जीविताः आसन् ते सर्वे शिल्पकाराणां गृहेषु, स्वर्णकाराणां गृहेषु,. अन्यत्र वा वर्धमानाः आसन् ।

कश्यपः तान् सर्वान् क्षत्रियान् आहूय तेभ्यः भूमिं दत्त्वा - ''भवन्तः एव एतस्याः भूमेः शासनं योग्येन क्रमेण कुर्वन्तु'' इति असूचयत् । एतेन केषुचित् एव वर्षेषु नूतन-राजवंशाः प्रवृद्धाः ।''

एवं कृष्णस्य मुखात् युधिष्ठिरः परशु-रामस्य कथां श्रुतवान् । अनन्तरं ते भीष्मं द्रष्टुं गतवन्तः । तदा उत्तरायणार्थं षट्पञ्चाशद् दिनानि अवशिष्टानि आसन् । भीष्मः युधिष्ठिरं सान्त्वयन् - ''युद्धे शत्रूणां हननं राजधर्मस्य विरुद्धं न । क्षत्रियधर्मः एव तथा सूचयति'' इति अवदत् । यावत् भीष्मः जीवति स्म तावत् सः धर्मराजाय धर्मं, नीतिं, च बोधयन् आसीत् । अन्ते भीष्मः नियतसमये प्राणत्यागं कृतवान् ।

तदा एव काचित् विचित्रा घटना प्रवृत्ता । यथा यथा भीष्मस्य शरीरात् प्राणाः निर्गताः तथा तथा तस्य शरीरे विद्यमानाः बाणाः पतिताः । एतत् दृश्यं दृष्ट्वा सर्वे आश्चर्य-चकिताः अभवन् ।

घृतं गन्धद्रव्याणि च आनीय पाण्डवाः विदुरः च चितां सज्जीकृतवन्तः । भीष्मस्य शवस्य उपरि श्वेतवस्त्रम् आच्छादितम् । पुष्पवर्षणम् अपि कृतम् । भीष्मस्य श्वेतच्छत्रं युयुत्सुः, चामरे भीमार्जुनौ, तस्य उष्णीशं नकुल-सहदेवौ च गृहीतवन्तः । युधिष्ठिर-धृतराष्ट्रौ तस्य चरणौ गृहीतवन्तौ । अनन्तरं भीष्मस्य दहनसंस्कारः सम्पन्नः । सर्वे गङ्गातीरं गतवन्तः । युधिष्ठिरः मृतात्मने जलतर्पणं कृतवान् ।

तदा युधिष्ठिरः बालवत् रोदनम् आरब्धवान् । भीमः कृष्णस्य सूचनानुसारं युधिष्ठिरस्य सान्त्वनं कृतवान् । तथाऽपि युधिष्ठिरस्य दुःखं न उपशान्तम् । अग्रजस्य दुःखं दृष्ट्वा अन्ये पाण्डवाः अपि रोदनं कृतवन्तः ।

तदा धृतराष्ट्रः युधिष्ठिरस्य सान्त्वनं कुर्वन् - ''शतपुत्राणाम् अन्यबान्धवानां सर्वेषां च वियोगं प्राप्तवता मया वस्तुतः रोदनं करणीयम् । भवान् किमर्थं रोदिति ? भवान् राज्यं जितवान् । भवतः स्कन्धे राज्यस्य उत्तरदायित्वम् अस्ति । रोदनं कुर्वन् मा तिष्ठतु

भवान् । एवं करणेन भवान् कर्तव्यच्युतः भवेत्'' इति अवदत् ।

व्यासमहर्षिः युधिष्ठिरद्वारा यज्ञं कारणीयम् इति प्रस्तावं कृतवान् ।

उत्तररूपेण युधिष्ठिरः - ''महात्मन् ! अश्वमेधयज्ञे दानं करणीयं भवेत् । लघु-वस्तूनां दानं चिन्तायै न भवेत् । महादानस्य एव चिन्ता मम । तदर्थं मम समीपे धनं नास्ति । भवान् अपि एतम् अंशं जानाति एव । प्रजाभ्यः धनसङ्ग्रहः अपि न उचितः । यतः निर्धनाः, दीनाः, बालाः च अवशिष्टाः सन्ति । रुदद्भ्यः कथं वा धनं स्वीकरोमि ? अतः तेषां सकाशात् सर्वथा धनं न स्वीकरोमि'' इति ।

तदा व्यासमहर्षिः युधिष्ठिराय धनप्राप्तेः उपायं सूचितवान् - ''प्राचीनकाले मरुत्त-महाराजः यज्ञं कृत्वा ब्राह्मणेभ्यः यथेष्टं दक्षिणां दत्त्वा तान् तोषितवान् । अवशिष्टं सर्वं धनं सः तत्रैव परित्यक्तवान् आसीत् । तत् धनम् आनीतं चेत् यज्ञार्थं पर्याप्तं भवेत्'' इति ।

युधिष्ठिरः मरुत्तमहाराजस्य कथां श्रोतुम् इष्टवान् । तदा व्यासः कथाम् आरब्धवान् -

''त्रेतायुगस्य प्रारम्भे मनोः वंशे करन्धम-नामकः कश्चन राजा आसीत् । सः बृहस्पतिं याजकरूपेण नियोज्य अश्वमेधयागं कृतवान् । तदा सः इन्द्रसमानः अभवत् । तस्य पुत्रः मरुत्तः सामर्थ्येन पितरम् अपि अतिशेते स्म । सः अपि 'यज्ञः करणीयः' इति सङ्कल्पेन सहस्रशः सुवर्णपात्राणि कारितवान् । यज्ञार्थं पात्रैः सह इतरोपकरणानि अपि सुवर्णेन एव निर्मितानि आसन् । राजा मरुत्तः अनेकैः राजभिः सह हिमालयस्य उत्तरभागे स्थितस्य मेरुपर्वतस्य समीपे एकस्मिन् पर्वते यज्ञं कृतवान् ।

अस्मिन् यज्ञे बृहस्पतिना याजकेन भवितव्यम् आसीत् । किन्तु इन्द्रः मरुत्तस्य विषये ईर्ष्यावान् आसीत् इत्यतः याजकरूपेण बृहस्पतेः गमनम् अवरुद्धवान् ।

अतः मरुत्तः बृहस्पतेः अनुजं संवर्त्तं याजकरूपेण नियुक्तवान् । अत्यन्तं वैभवेन यागः सम्पन्नः । तदा मरुत्तः सुवर्णं राशीकृत्य ब्राह्मणेभ्यः दानं कृतवान् । तथापि बहु सुवर्णम् अवशिष्टम् अभवत् । तत् सुवर्णं भवान् आनयतु'' इति । व्यासः एवं युधिष्ठिरम् उद्दिश्य हितवचनम् अवदत् ।



# वार्ताविशेषः

## "कियद्विशालम् !!... कियद्बृहत् !!!"



जपान्‌देशस्य मुनेनोरि इकेगमी यद्यपि आङ्ग्लभाषां सम्यक् न जानाति, तथापि स्वमनसः आश्चर्यम् अभिव्यञ्जयितुं सः प्रयत्नं कृतवान् । विषयः तु- प्रयागे सम्पन्ना सद्यः एव समाप्तिं गता कुम्भमेला, यत्र च कोट्यधिकाः सम्मिलिताः आसन् । सः वदति - ''गियान् मतुरि - जपानदेशस्य महत् पर्व । सौत्-आफ्रिकादेशे प्रचाल्यमानः 'सहस्राब्दिकपर्व' अपि सुमहत् । आस्ट्रेलियादेशे प्रचाल्यमानं 'अबोरिजनेस्'पर्व अपि अतिमहत् । तथापि तानि पर्वाणि कुम्भमेलायाः तुलाम् अपि न अर्हन्ति'' इति । सौताफ्रिका-आस्ट्रेलिययोः कार्यक्रमयोः चित्रीकरणं तेन कृतम् आसीत् । 'कुम्भमेलायाः चित्रीकरणार्थं कार्यालयतः एव प्रेषयन्ति' इति सः चिन्तितवान् आसीत् । परन्तु तथा न जातम् इति खिन्नः सः त्यागपत्रं दत्त्वा भारतम् आगतः । अधुना स्वदेशं प्रतिगतः सः, स्वेन चित्रीकृतं कुम्भमेलायाः चित्रं विक्रेतुम् इच्छन् नूतनोद्योगस्य अन्वेषणे मग्नः अस्ति । सः वदति - 'अस्मिन् यत्ने अहं विजेता भवेयम् उत न इति तु न जानामि । तथापि एतत् तु निश्चितवान् अस्मि यत् २०१३ वर्षे प्रचलिष्यमाणायां महाकुम्भमेलायां निश्चयेन उपस्थितो भविष्यामि'' इति ।

## अहो, पुत्रवात्सल्यम् !

के. वै. वाङ्ग् ब्याङ्काक्‌नगरे कस्याश्चित् संस्थायाः निर्वहणाधिकारी । स्वपुत्रस्य 'वाङ्ग् यूकी'नामकस्य 'वयोलिन्'वादनकौशलात् नितरां प्रभावितः अस्ति सः । सः पुत्रः इटलीदेशस्य २०० वर्षपुरातनं लोरेञ्झो-स्टोरियोनि-वयोलिन्‌वाद्यं प्राप्तुं महतीम् इच्छां प्रकटितवान् । 'कापि समस्या नास्ति । तत् दापयामि' इति आश्वासनं दत्तवान् पिता । पिता विना शब्दं सिङ्गापुरे विद्यमानं स्वगृहं ३६४,००० डालर्‌मूल्येन विक्रीय तत् वाद्यं क्रीत्वा स्वपुत्राय उपायनरूपेण दत्तवान् । विलक्षणा खलु पुत्रप्रीतिः !!



चन्दमामा प्रस्तुतिः

# अजेयः गरुडः

कला - पाणिः

चन्द्रपुरीराज्ये महेन्द्रदेवो नाम चन्द्रवंशीयः राजा न्यायेन धर्मेण च राज्यं परिपालयति स्म । राजा अनपत्यः आसीत् । राज्ञ्याः अनुजस्य नरेन्द्रदेवस्य पुत्रः रवीन्द्रदेवः वस्तुतः सिंहासनस्य उत्तराधिकारी भवितुम् अर्हः । नरेन्द्रदेवः सेनापतिपदे आसीत् । किन्तु सः असमर्थः । योग्यस्य मन्त्रिणः आकस्मिक-मरणतः राजा नितरां दुःखितः । मन्त्रिणः पुत्रः आदित्यः युद्धकलायां सुनिपुणः जातः आसीत् । सः अश्वारोहिसैनिकेषु अन्यतमः आसीत् ।

स्वराज्ये लुण्ठाकानां प्राबल्यं वर्धमानम् अस्ति इति श्रुत्वा राजा कुपितः । राजास्थाने तेन क्रोधः प्रकटितः ।

किम् एतां समस्यां निवारयितुं कोऽपि मार्गं सूचयितुं न अर्हति अत्र ?

सजीवं ते ग्रहीतव्याः इति भवतः आज्ञा यदि न स्यात् तर्हि ते एतावता मृत्युलोकातिथयः अभविष्यन् ।

आदित्य, लुण्ठाकानां ग्रहणाधिकारः दीयते भवते ।

सेनापतेः कथनात् राजा असन्तुष्टः आसीत् । अतः सः एतस्मिन् कार्ये अपरं नियोक्तुम् इष्टवान् ।

अनुगृहीतोऽस्मि । श्वः एव एतस्मिन् कार्ये उद्युक्तः भविष्यामि । अद्य मम भगिनी ऐदम्प्राथम्येन पतिगृहात् मम गृहम् आगच्छन्ती अस्ति ।

अस्तु । श्वः एव कार्यारम्भः अवश्यं करणीयः ।

तस्यां रात्रौ एका शिबिका अरण्य
मार्गेण गच्छन्ती आसीत् । तस्याः
संरक्षकाः न आसन् । शिबिका
वाहकाश्च न जानन्ति स्म यत्













सा महिला क्व गता ?
किं ते पलायिताः ?
मया अत्र काऽपि महिला न दृष्टा ।


अहो, केचन अश्वारोहिणः
समग्रः लुण्ठाकगणः आश्चर्यचकितः जातः ।
अस्माभिः जागरूकैः भाव्यम् ।
किम् एतत् प्रवर्तते ।
भ्रातरः, वृक्षान्तरिताः भवाम ।


सैनिकानां कश्चन गणः शिबिकाभागम् अपसार्य अन्वेषणम् अकरोत् ।
अत्र कोऽपि न दृश्यते ।
ते पलायिताः तु न स्युः ।


ते वृक्षगुल्मेषु निलीनाः सन्ति ।
तान् गृहीत्वा वयं राजसम्मुखम् उपस्थापयामः ।
भवन्तः वृक्षात् अवतरन्तु शीघ्रम् ।


लुण्ठाकाः गृहीताः । एकया एव अखण्डरज्ज्वा तेषां हस्तौ बद्धौ । सैनिकाः तान् राजभवनं नीतवन्तः ।
CU... KOO..


सैनिकाः, बद्धाः लुण्ठाकाः च राजभवनं प्राप्तवन्तः ।


महाराजं निवेदयतु यत् लुण्ठाकाः गृहीताः इति । अहं तस्य आज्ञां प्रतीक्षे । तदपि तं निवेदयतु ।


यदा द्वारपालः अन्तः गतः तदा राजा सेनापतिना सह वार्तालापं कुर्वन् आसीत् ।
तान् प्रवेशयतु । अत्रैव पश्यामि तान् ।


श्रीमन् ! राजास्थाने राजा भवन्तं प्रतीक्षते ।


तान् कारागारे स्थापयन्तु । तेषां नायकः कः ? जनानां सम्मुखे तम् अहं शूलम् आरोपयितुम् इच्छामि ।
महाराज ! तेषां नायकः कः इति मया न ज्ञायते । किन्तु एतत् तु स्पष्टं यत् राजास्थानस्थः एव कश्चित् तान् अस्माकं वार्तां प्रापयति इति । अतः मया भगिनी-आगमनकथा कल्पिता ।


कारागारं प्रति लुण्ठाकानां नयनसमये आकस्मिकेन तेषु कश्चित् अभिज्ञातः ।


रामसिंह !
आं श्रीमन् ! भवता वयं गृहीताः । किन्तु ततः भवता चन्द्रपुरीजनानां विषये विश्वासघातः कृतः ।
- (अनुवर्तते)

# परीक्षाज्वरात् मुक्तिः कथम् ?




"भवतां परीक्षा अग्रिममासे आरप्स्यते । भूचित्रं जागरूकतया पठनीयम् । स्मरन्तु एतत्" इति उक्तवती श्रीमती लताशङ्करवर्या ।

श्मशानमौनम् आवृतं कक्ष्यायाम् । अनुक्षणं जीवनं गम्भीरम् अवधानाश्रितं च जातम् । मीरायाः हस्तयोः स्वेदः उत्पन्नः, हृदयम् आवेगम् आप्नोत् । तस्यां रोदनेच्छा उत्पन्ना । सा धावितुम् इष्टवती परीक्षाभ्यः, पुस्तकेभ्यः कठिणविषयेभ्यः च बहुदूरम्...

मीरा परीक्षाः न इष्टवती । ताः तस्याः चित्तस्वास्थ्यं नाशयन्ति स्म । प्रबन्धलेखनं, कार्ययोजनानिर्माणं, कार्यावलीनिर्माणम् इत्यादयः कदापि क्लेशं न उत्पादयन्ति स्म । परन्तु परीक्षाशब्दस्य श्रवणमात्रेण एव तस्याः उदरे पीडा उत्पद्यते स्म, अस्वस्थता आशरीरं सञ्चरति स्म । तया तावत्पर्यन्तम् अभ्यस्तं पठितं सर्वमपि विस्मर्यते स्म ।

परीक्षादिनेषु कक्ष्या अत्यन्तम् अपरिचिता भयजनिका च दृश्यते स्म । विनोदशीलाः सहपाठिनः उद्विग्नाः मौनाश्रिताः च दृश्यन्ते स्म । शिक्षकाः कार्यव्यग्राः दूरस्थाः इव दृश्यन्ते स्म । कस्यापि मुखे हासः न दृश्यते । यदा मीरा प्रश्नपत्रिकां प्राप्तवती तदा सा महत् औष्ण्यं शैत्यं च अनुभूतवती । सा तत्र मुद्रितानि अक्षराणि कष्टेन एव पठितुं शक्ता जाता । यद्यपि सा परिश्रमपूर्वकं पुस्तकानि पठितवती एव आसीत् तथापि तस्याः मनसि अभासत यत् स्वसामर्थ्यानुगुणं लेखितुं मया न शक्यते इति ।

परीक्षाघोषणस्य श्रवणात् भवतां मनसि के भावाः उत्पद्यन्ते ? किं मीरा इव उद्विग्नाः ज्वरग्रस्ताः च भवन्ति भवन्तः ? मया परीक्षायाम् उत्तराणि लेखितुं न शक्यन्ते इति चिन्त्यते ? अथवा परीक्षाः एव मा भवन्तु इति भासते ?

## दृढनिश्चयार्थं सङ्कल्पाः

१. मया क्रियमाणं युक्तम् एव इति यावत् स्पष्टं तावत् अहं प्रयत्नं न परित्यजामि ।
२. अन्त्यपर्यन्तं यदि प्रयतिष्ये तर्हि फलं निश्चयेन प्राप्स्यते इति मम विश्वासः ।
३. विषमपरिस्थितौ सत्याम् अपि अहं सर्वदा उत्साही अनुद्विग्नः च स्थास्यामि ।
४. मां लक्ष्यात् विमुखं कर्तुं कस्मै अपि अवकाशं न दास्यामि ।
५. सर्वविधशारीरिकन्यूनतानां जाड्यानां च निवारणाय दृढप्रयत्नं करिष्यामि ।
६. मम लक्ष्यसिद्ध्यर्थं पौनःपुन्येन प्रयत्नं करिष्यामि ।
७. सर्वैः महात्मभिः अपि प्रतिकूलपरिस्थितिः अनुभूतपूर्वा एव इति जानन् नूतनैः विश्वासनिर्णयैः कार्यरतः भविष्यामि ।
८. दृश्यमानैः अवरोधैः अहं कदापि विचलितः निरुत्साही वा न भविष्यामि ।

– हार्मन् शेर्मन्

# परीक्षाज्वरः कथम् आयाति ?

कदा भवान् भीतः भवति ? यदा भवन्तं परितः जनाः भीताः भवन्ति तदा । एवं ननु ? 'स्नेहिताः भीताः भवन्ति' इत्येषः एव छात्रेषु परीक्षाज्वरस्य उत्पत्तेः एकं मुख्यं कारणम् । एषः ज्वरः पीनसवत् सर्वान् गृह्णाति । अतः सर्वे अस्वस्थताम् अनुभवन्ति ।

'समीचीनतया परीक्षासिद्धता न कृता, अतः सम्यक् लेखितुं न शक्नुयाम्' इत्येतत् चिन्तिनम् एव परीक्षाज्वरस्य अन्यत् कारणम् । परन्तु परीक्षातः भेतव्यं किमपि नास्ति !

## महेशः कार्यपर्वतः च

*महेशः गुरुवासरे ज्ञातवान् यत् गणितस्य यं भागं सः सप्ताहद्वयतः पठन् आसीत् तस्य परीक्षा अग्रिमे सोमवासरे एव भविष्यति इति । सः कानिचन गणनानि कृतवान् आसीत् । परन्तु इतोऽपि तेन अज्ञातानि बहूनि आसन् । सः बहुधा दूरदर्शनं पश्यन् गृहपाठकार्यं कृतवान् आसीत् । अध्यापकेन परिशील्य प्रत्यर्पितानां गृहपाठानाम् अवलोकने अपि तेन अवधानं न दत्तम् आसीत् । अन्यैः मित्रैः लिखितं गृहपाठम् एव दृष्ट्वा लिखित्वा स्वस्य गृहपाठं सज्जीकृत्य अध्यापकाय दत्तवान् आसीत् सः ।*

*भानुवासरे रात्रौ सः पठितुं निर्णीतवान् । सः चिन्तितवान् यत् अत्र विद्यमानानि सर्वाणि गणनानि कर्तुं शक्यानि इति । परन्तु यदा लेखितुम् उपविष्टवान् तदा सर्वं पर्वतवत् अभासत । गणनानि सुलभानि न आसन् । आसायम् उपविश्य पादभागमात्रम् अवलोकितुं शक्तः जातः सः । सर्वं समापयामि इति निर्णीय उपविष्टवता तेन ज्ञातानां गणितसमस्यानाम् अपि उत्तरं लेखितुं न शक्तं, यतः निद्रा तं बाधते स्म । अपरिशीलिताः गणितसमस्याः दृष्ट्वा सः हताशः जातः । अन्ते तस्य माता 'श्वः उत्थाने बिलम्बः न भवेत् । अतः शयनं करोतु' इति वदन्ती तं शयनार्थं प्रेषितवती । महत्याः निराशायाः कारणतः सः अनन्तरदिने परीक्षायाम् उत्तमतया लेखितुं न शक्तवान् । सः निर्णीतवान् यत् पुनः*




*एतादृशी दयनीया स्थितिः कदापि न भवेत्, अतः परिश्रमेण अध्ययनं कृत्वा अन्तिम-परीक्षायाम् उत्तमान् अङ्कान् प्राप्स्यामि इति ।*

*भवान् यदि सर्वदा 'श्वः करिष्यामि' इति चिन्तयन् पठनकार्यं राशीकरोति तर्हि पठनीयं सर्वं भवान् पठितुं न शक्नुयात् । तदा सर्वमपि कण्ठस्थीकरणीयम् इति भासते । अन्तिमक्षणे पठितं स्मरणे न भवति इत्यतः परीक्षायां निराशा भवति । तस्मात् इतोऽपि दोषाः सम्भवन्ति । निरन्तरपठनम् एकम् एव अपजय-रहितः मार्गः ।*



## आवर्षं करणीयमेतत्

- कक्ष्यायाम् अवधानं भवतु ।
- कक्ष्यालेखनपुस्तकं टिप्पणीपुस्तकं च व्यवस्थितं भवतु ।
- सर्वाणि गृहपाठकार्याणि कुर्वन्तु ।

परीक्षायाः पूर्वं भवद्भिः भवतां टिप्पणी, अध्यायानां तात्पर्यं, भवतां पुस्तके विद्यमानाः प्रश्नाः, कक्ष्यायां लिखिता टिप्पणी च पठनीयाः, न अन्ये । यतः सर्वे विषयाः भवद्भिः ज्ञाताः एव सन्ति । सामान्यतः सर्वेषां प्रश्नानाम् उत्तरं लेखितुं प्रभवन्ति एव भवन्तः ।



## अन्तिमपरीक्षातः पूर्वम् ...

- एकमासात् पूर्वमेव पुनरावर्तनस्य आरम्भः भवतु ।
- दिनदर्शिनीम् उपयुज्य पुनरावर्तनयोजनां कुर्वन्तु ।
- सर्वेषां विषयाणां निमित्तं भवतां योजनायां समयः रक्षितः भवतु ।
- सर्वान् विन्दून् अपि एकवारं वा पुनः पठन्तु ।

## पुनरावर्तनं कथम् ?

- प्रदत्तान् सर्वान् विषयान् एकवारं पठन्तु ।
- तत्रत्याः परिकल्पनाः अवगताः वा इति परिशीलयन्तु ।
- मुख्यविषयाणां तात्पर्यं लिखन्तु ।
- सामान्यप्रश्नपत्रिकायाः स्वरूपं जानन्तु ।
- समयावधानपूर्वकं उत्तरलेखनस्य अभ्यासं कुर्वन्तु ।
- केवलं कण्ठस्थीकरणं न, लेखनाभ्यासं कुर्वन्तु ।

ततः परीक्षापूर्वदिनेषु भवद्भिः लिखितां टिप्पणीं जागरूकतया पठन्तु । अनन्तरं पुनरावर्तनप्रश्नान् लिखित्वा उत्तरम् अपि लिखन्तु । भवतां हस्तयोः स्वीय-स्मरणशक्तिः भवति । अतः यदि एकदा लिख्यते तर्हि उत्तरस्य स्मरणं सुलभ-तया शक्यते ।



## परीक्षातः पूर्वदिने...

- अन्तिमक्षणे नूतनपाठांशस्य पठनं मास्तु ।
- तात्पर्यावलोकनं कुर्वन्तु ।
- उत्तमभोजनं कृत्वा निद्रान्तु ।
- शीघ्रं निद्रान्तु ।

नूतनविषय-कौशलाध्यायनार्थम् एषः समयः न । एतदभ्यन्तरे भवन्तः यत् पठितवन्तः तदेव सहायकम् । अधिक-पूरणार्थं यत्नः भवन्तं भाययति, श्रान्तिम् उत्पादयति च । एतस्मात् अपि विश्रान्तिस्वीकारः तृप्त्या निद्रा च वरम् ।

## परीक्षासमये...

- शान्ताः भवन्तु ।
- सर्वान् प्रश्नान् सूचनाः च जागरूकतया पठन्तु ।
- प्रतिप्रश्नार्थं स्वस्य आशयानुगुणं समयं निश्चिन्वन्तु । पुनरावर्तनार्थमपि समयं रक्षन्तु ।
- अत्मना ज्ञातानां सर्वेषां प्रश्नानाम् उत्तरं लिखन्तु ।
- अनन्तरम् आत्मना अज्ञातान् प्रश्नान् पश्यन्तु । द्वित्रवारं सावधानेन पठन्तु । अनन्तरं तस्य पाठस्य विषये चिन्तयन्तु ।
- प्रायशः उत्तरं स्फुरति एव ।
- एकस्य प्रश्नस्य विषये बहु समयं मा यापयन्तु ।
- यदि समयः अवशिष्यते तर्हि आत्मना लिखितानि उत्तराणि जागरूकतया परिशीलयन्तु ।
- अक्षरदोषान् व्याकरणदोषादीन् च निवारयन्तु ।






शुभम् आशास्महे

### स्मर्तव्याः शब्दाः

*शब्दकोषमात्रे एव वयं 'श्रमात्' पूर्वं 'फलं' प्राप्तुं शक्नुमः । (तत्राम श्रमशब्दात् पूर्वं फलशब्दः द्रष्टुं शक्यः कोषे) किन्तु जीवने फलं प्राप्तुं परिश्रमः एकः एव अस्माभिः दातव्यं मूल्यम् । यदि अपेक्षितं मौल्यं दातुं सिद्धाः भवामः तर्हि यत्किमपि साधयितुं शक्यते एव इति मम मतिः ।* – **विन्स् लिम्बार्डि**

*कार्यकरणार्हता एव सामर्थ्यम् । प्रेरणा भवतः कार्यं निर्णयति । कथम् उत्तमरीत्या भवान् करोति इत्येतत् भवदीया दृष्टिः निर्णयति ।* – **लौ होल्ट्स्**

*इतोऽपि उत्तमं कर्तुं यः निरन्तरप्रयत्नः क्रियते तस्य फलमेव प्रावीण्यम् ।* – **पाट् रिलै**

*निरन्तरतया क्रियमाणानाम् एकैकस्य दिनस्य अपि लघुपरिश्रमाणां सङ्कलनम् एव यशः नाम ।* – **राबर्ट् कोलियर्**



# राज्ञः समस्या

कस्मिंश्चित् नगरे कश्चन राजा आसीत् । यद्यपि सः उत्तमः, तथापि बुद्ध्या किञ्चित् मन्दः एव आसीत् । एकदा कश्चन ब्राह्मणः राज्ञः गृहे पुराणवाचनं कुर्वन् आसीत् । तदा यमलोकस्य विषये पठन् सः पापिनां कृते दीयमानानि विविधानि दण्डनानि विवृतवान् ।

पुराणवाचनसमनन्तरमेव राजा ब्राह्मणं पृष्टवान् – ''पण्डितवर्य, भवान् स्वर्गनरकयोः विषये समीचीनं विषयसङ्ग्रहणं कृतवान् अस्ति । किन्तु कृपया मम सन्देहं परिहरतु । अहम् एवं श्रुतवान् अस्मि यत् – 'अस्माकम् उपरि आकाशः अस्ति, अधः भूमिः अस्ति' इति । भूलोके विविधाः प्राणिनः सन्ति । तेषु कथं केचन नरकं, केचन स्वर्गं च गच्छन्ति ? कृपया सविस्तरं विवृणोतु'' इति ।

एतं प्रश्नं श्रुत्वा ब्राह्मणः आश्चर्यचकितः अभवत् । 'उत्तरं न दत्तं चेत् राजा दण्डनं कुर्यात् ?' इति भयमपि अनुभूतवान् सः । भीत्या एव सः ब्राह्मणः – ''महाराज, भवतः प्रश्नानाम् उत्तरं दातुं मया सर्वाणि शास्त्राणि परिशीलनीयानि भवेयुः । कृपया समयावकाशं ददातु'' इति उक्त्वा परेद्यवि प्रातः एव स्वग्रामं प्रति पलायितवान् ।

परेद्यवि ब्राह्मणः पलायनं कृतवान् इति राज्ञा अपि ज्ञातम् । राजा चिन्तितवान् यत् – 'तादृशः पण्डितः अपि मम प्रश्नस्य उत्तरं दातुम् असमर्थः अभवत्' इति । अतः प्रश्नः एव गम्भीरः स्यात् इति मत्वा सः यं यं पश्यति तं तम् उद्दिश्य सदा तं प्रश्नं पृच्छति स्म ।

शीघ्रमेव राज्ये सर्वत्र राज्ञः प्रश्नः सर्वैः ज्ञातः अभवत् । राज्ञे यः पुराणं श्रावितवान् आसीत् तस्य एकः पुत्रः आसीत् । तस्य नाम भास्करः । सः कार्यं विना सर्वत्र सञ्चरन् समयं यापयति स्म । सर्वदा मातरं पीडयति स्म सः । एकदा तस्य माता घरट्टेन गोधूमं चूर्णयन्ती आसीत् । तदा तत्र आगतः भास्करः

'श्रीमाता'



मातुः पीडनम् आरब्धवान् ।

क्रुद्धा सा - ''गत्वा राज्ञः समस्यां वा परिहरतु । मां पीडयति खलु'' इति उक्तवती ।

तदा भास्करः - ''अस्मादृशानां निर्धनानाम् एव समस्याः भवन्ति । राज्ञः कीदृशी समस्या भोः ? तस्य का समस्या इति वदतु तावत्'' इति पृष्टवान् । सः अपि मातुः पुरतः उपविश्य घरट्टं चालयन् आसीत् ।

तदा तदीया माता - ''अस्माकम् उपरि आकाशः अस्ति । अधः भूमिः । भूमौ असंख्याः प्राणिनः सन्ति । तेषु केचन स्वर्गं केचन नरकं च किमर्थं गच्छन्ति, कथं गच्छन्ति इत्येव राज्ञः समस्या'' इति वदन्ती घरट्टस्य उपरितनं भागम् उत्थाप्य दृष्टवती । घरट्टे केषाञ्चन गोधूमानां चूर्णं जातम् आसीत् । केचन गोधूमाः यथावत् आसन् । एतत् भास्करः लक्षितवान् । झटिति किमपि अवगतवान् इव सः ततः उत्थाय साक्षात् राजगृहं गत्वा द्वारपालकम् उद्दिश्य - ''अहम् इदानीमेव राज्ञः दर्शनं कर्तुम् इच्छामि'' इति अवदत् ।

भास्करस्य वेषं दृष्ट्वा द्वारपालकः - ''राज्ञः दर्शनं विनायासेन प्राप्यते इति चिन्तितवान् वा भवान् ? गच्छतु इतः'' इति उक्तवान् ।

''अहं राज्ञः समस्यां परिहर्तुम् आगतवान् अस्मि इति महाराजं निवेदयतु'' इति उक्तवान् भास्करः ।

यदा राज्ञा विषयः ज्ञातः तदा सः भास्करम् अन्तः आगन्तुं सूचितवान् । किन्तु भास्करं दृष्ट्वा राज्ञः मनसि 'मम प्रश्नस्य समाधानं वक्तुम् एषः न शक्नुयात्' इति सन्देहः उत्पन्नः ।

राजा भास्करम् उद्दिश्य - ''किं भवान् मम समस्याम् अवगतवान् अस्ति ? भवान् तस्य प्रश्नस्य उत्तरं दातुं शक्नोति किम् ?'' इति पृष्टवान् ।

''अहं न केवलं मौखिकम् उत्तरं ददामि, किन्तु प्रत्यक्षं दर्शयिष्यामि'' इति अवदत् भास्करः ।

राजा अनुक्षणं सभासदः आहूतवान् । सर्वेषां सभासदां सम्मुखे राजा स्वस्य सन्देहं पुनः प्रकटीकृत्य - 'उत्तरं वदतु' इति भास्करं सूचितवान् ।

भास्करेण घरट्टः, गोधूमाः च आनायिताः । मुष्टिपरिमितं गोधूमं घरट्टे स्थापयित्वा भास्करः घरट्टचालनम् आरब्धवान् । गोधूमस्य चूर्णीकरणं यदा आरब्धं तदा सः - ''महाराज, पश्यतु । घरट्टस्य यः भागः उपरि भ्रमन् अस्ति सः एव आकाशः । अधस्तनस्थिरभागः भूमिः । अत्र पूरिताः गोधूमाः एव प्राणिनः । गोधूमं यः स्थापयति सः भगवान् । हस्तस्य पञ्च अङ्गुल्यः एव पञ्चमहाभूतानि'' इति वदन् घरट्टं चालितवान् । अनन्तरं सः उपरितनं भागम् उत्थाप्य - ''महाराज, दृष्टं खलु ? कतिचन धान्यानि चूर्णानि भूत्वा यमयातनाः अनुभवन्ति । तन्नाम घोरं नरकवासम् अनुभवन्ति । इतरधान्यानि पूर्ववत् एव सन्ति । एते यमलोकात् मुक्ताः प्राणिनः । एतेषां नरकभयं नास्ति । एते स्वर्गसुखम् अनुभवन्तः सन्ति'' इति अवदत् ।

अत्यन्तं प्रसन्नः राजा भास्करम् उद्दिश्य - ''भवान् महाज्ञानी अस्ति इत्यत्र नास्ति सन्देहः । भवान् कस्य पुत्रः ? शीघ्रं वदतु तावत्'' इति अवदत् ।

भास्करः महाराजम् उद्दिश्य - ''पूर्वं यः भवते पुराणं श्रावयति स्म तस्य पुत्रः अहम्'' इति अवदत् ।

महाराजः - ''भवान् ज्ञानेन स्वस्य पितरम् अपि अतिशेते'' इति वदन् राङ्कवं धारयित्वा पुरस्कारमपि दत्त्वा भास्करस्य सम्माननं कृतवान् । तस्मात् दिनतः भास्करः व्यर्थ-कालहरणं परित्यज्य उत्तमं जीवनम् आरब्धवान् ।



